- Title – अज्ञात
- Accession No – Title –
- Accession No –
- Folio No/ Pages –
- Lines-
- Size
- Substance Paper –
- Script Devanagari देवनागरी
- Language – संस्कृत
- Period –
- Beginning –
- End –
- Colophon-
- Illustrations -
- Source -
- Subject - कर्मकाण्ड से सम्बन्धित
- Revisor -
- Author -
- Remarks- अपूर्ण

वलवन्तर पूर्वीशौजेनाग्निमाशौचत्र वृतिरि भतिभारः

अं०
टी०
५

ब्राह्मणादिभिः सर्वैः प्रथमदिवसे त्रयः पिंडा देयाः द्वितीयदिने चत्वारः तृतीयदिने त्रयः पिंडा देयाः अथवा
प्रथमदिवसे एकः पिंडः द्वितीयदिने चत्वारः तृतीयदिने पंच एवं दश पिंडा दातव्याः सद्यः शौचे त्वेकाहे नै
व दश पिंडा दातव्याः असंपूर्णाशौचांतरे एकैकपिंडमेकैकस्मिन्दत्त्वा अंतिमदिने ऽवशिष्टाः पिंडा देयाः
पाकासंपत्तौ फलमूलशाकगुडदुग्धशालिसक्तूनामन्यतमेन पिंडो देयः येन द्रव्येन प्रथमः पिंडो दत्तस्त
ज्जातीयेनैव पिंडांतरमपि दद्यात् पुत्राद्यधिकारिणि विदेशस्थे ऽन्येन दाहकर्त्रा पिंडदाने कृते त्रादिरपि पिंडं

दद्यात् येनैव प्रथमः पिंडो दत्तः स एव पिंडांतरमपि दद्यात् अथास्थिसंचयः चतुर्थे ब्राह्मणानां तु पंच
मे ऽहनि भुजां नवमे वैश्यजातीनां शूद्राणां दशमात्परे कर्तव्यं तु नरैः प्राज्ञैः देशकालाविरोधतः श्राद्ध
मत्रास्थिसंचयनिमित्तकं एतच्च पूर्णाशौचेषु दिनकथनं एवमशौचिनामंगस्पर्शोऽपि चतुर्थेऽहनि विप्र
स्य षष्ठे वै क्षत्रियस्य तु अष्टमे दशमे चैव स्पर्शः स्याद्वैश्यशूद्रयोः यत्तु प्रथमेऽहनि तृतीये वा सप्तमे नव
मेऽपि वा अस्थिसंचयनं कार्यं निजैस्तद्गोत्रजैः स्मृतमिति वाक्यं तद्ब्राह्मणादीनां चतुर्थादिदिने ऽस्थि
संचयासंभावनायां प्रथमादिदिवसे ऽस्थिसंचयविधायकं अहाशौचे तु द्वितीयेऽहनि सद्यः शौचे

१

३०

तत्र त्रयस्तिलतोयांजलयस्त्रीणि तिलतोयपात्राणि चतुर्थदिने नाभिलिंगगुदपूरकश्चतुर्थः पिंडः चत्वार
स्तिलतोयांजलयः चत्वारि तिलतोयपात्राणि पंचमदिने जानुजंघापादपूरकः पंचमः पिंडः पंचतिलतो
यांजलयः पंचतिलतोयपात्राणि षष्ठदिने सर्वमर्मपूरकः षष्ठः पिंडः षट्तिलतोयांजलयः षट्तिल
तोयपात्राणि सप्तमदिने सर्वनाडीपूरकः सप्तमः पिंडः सप्ततिलतोयांजलयः सप्ततिलतोयपात्राणि अष्ट
मदिने दंतलोमादिपूरकोऽष्टमः पिंडः अष्टौ तिलतोयांजलयः अष्टतिलतोयपात्राणि नवमदिने वीर्य
पूरको नवमः पिंडः नवतिलतोयांजलयः नवतिलतोयपात्राणि दशमदिने पूर्णत्वतृप्तिता क्षुधादिपर्यय
पूरको दशमः पिंडो देयः दशतिलतोयांजलयः दशतिलतोयपात्राणि अन्यत्सर्वं समानं तथाहि शि
रश्चाद्येन पिंडेन प्रेतस्य क्रियते सदा द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः गलांसभुजवक्षांसि
तृतीयेन तथाक्रमात् चतुर्थेन तु पिंडेन नाभिलिंगगुदानि च जानुजंघे तथा पादौ पंचमेन तु सर्वदा सर्व
मर्माणि षष्ठेन सप्तमेन तु नाडयः दंतलोमाद्यष्टमेन वीर्यं तु नवमेन तु दशमेन तु पूर्णत्वं तृप्तिता क्षुधादिपर्य
यः क्षत्रियवैश्यशूद्राणां संपूर्णाशौचे न दिनेषु नव पिंडान् दत्वा शौचांतदिने दशमपिंडदानं त्र्यहाशौचे

अं॰ ४

वपश्चाणिं दंतैः छित्वाचम्य दक्षिणेन पाणिना ॐ शमीपापं शमयतु इति शमी। ॐ अश्मेव स्थिरो भूयासमित्यश्मा
नं ॐ अग्निर्नः शर्म यच्छत्वित्यग्निं स्पृशेत्। वृषभमजं गयोर्मध्ये स्थित्वा ज्योगिति मंत्रेण दक्षिणेन पाणिनाश्मावपि
स्पृशेत्। ततश्च अश्मनि पदन्यासं कृत्वाचम्योदकगोमयसर्षपाग्निदूर्वाप्रवालवृषभान्संस्पृश्य गृहं प्रविशेयुः॥ ए
तच्च कुलेतरज्ञातीनां तु दशमस्पर्शमपि कर्तव्यं ज्ञातयो नैव तस्यां रात्रावन्नं पचेयुः। यावदशौचं मृण्मये पात्रे पत्रपुटे
पाणौ वा क्रीतलब्धमना मिषं दिवा भुंजीरन्नेककालं त्रिरात्रमक्षारलवणाशिनः द्वादशरात्रं महागुरुषु मातापि
ताभ्राचार्यश्रेति महागुरवः सर्वेब्रह्मचारिणो दीनामलिना भोगवर्जिताः शस्त्रपाणयोऽधउपवेशिनः पृथक्
क्षितौ शयीरन् उपवेशने शयने च तृणप्रस्तरमुपासीरन् प्रेतक्रियावर्ज्जमनावश्यकं न किंचित्कर्म कुर्युः
पंचमसप्तमनवमदिवसेषु सर्वेषामेव सपिंडानां वहिः स्नानं तिलोदकदानं वस्त्रप्रक्षालनं सहभोजनं चतुष्प
थश्मशानगृहेषु दीपदानमसंवाहनं च तैलाभ्यंजनं जागरादिकं प्रेताप्यायनकरं प्रथमपिंडदानवत्
द्वितीयादिषु दिवसेषु द्वितीयादिपिंडदानं तत्र विशेषः द्वितीयदिने पिंडदानवाक्ये कर्णाक्षिनासिकापूर
को द्वितीयः पिंडः द्वौ तिलतोयांजली द्वे तिलतोयपात्रे तृतीयदिने गलांशभुजवक्षःपूरकस्तृतीयः पिंडः

५ ॐ अद्यामुक गोत्र पितरमुक प्रेत इदं पानीयं ते मया०

गंधपुष्पधूपदीपोर्णतंल मयमुद्धृ वहक्ष्वतां वूला नि पिंडे दद्यात् । ततो यावद्भूमाब्धं निःसरति तावत्पिंडाभि
मुखवस्त्रि पेत् । ततो पस्थ्यादिनैव ॐ अद्यामुक गोत्र पितरमुक प्रेत एष सतिलतोयांजलिस्ते मया दीयते तवो
पतिष्ठतामित्येकृतिलतोयांजलिं पिंडोपरि दद्यात् । एवं पिंडसमीप एव । ॐ अद्यामुक गोत्र पितरमुक प्रेत
इदं तिलतोयपूर्णपात्रं ते मया दीयते तवोपतिष्ठतामिति एकं तिलतोयपूर्णपात्रं दद्यात् । पश्चात्सूत्रेण सर्वं हि पेत्
दीपं च तदुपरि स्थाप्यामृत्तो माल्यं पानीयं निधाय । ॐ अद्यामुक गोत्र पितरमुक प्रेत इदं माल्यं ते मया दीयते तवोपतिष्ठतां
मिति दीपं च दद्यात् । सायंकाले गृहद्वारि प्रेतमुद्दिश्य दशरात्रं दीपं दद्यात् । रात्रौ मृन्मयो पात्रे तोयं मूर्ध्नि तत्र काष्ठका
समारोपित मृन्मयपात्रद्वये जलं क्षीरं च विधाय । तत्समीपे माल्यं दीपं च धृत्वा । ॐ अद्यामुकस्यां रात्रौ अमुक गोत्र पि
स्नाहि तरमुक प्रेत अत्र स्नाहि । इदं पिब । इदं परिधेहि । अनेन पथ्येति निवेदयेत् । आकाशाधिकरणकदशरात्रावधि प्रेते
तोद्देशक घटधारादानं घृतजलदानं सर्वपापशांत्यध्वश्रमविनाशफलं प्राप्नोति । अस्तके सूर्ये पिंडं दद्याद्दिवा अस्तके न
रात्रौ दद्येव […] अनुमत्या […] पितृपुरस्सरा स्थित पश्चिमाः […] गृहद्वारमागत्य तत्रैव नि

कपित कालात्

गो ५

नम्नेयीप्रवर्तं

२ पुत्रादीनशुचिशाद्वलदेशेउपविष्टान् नायमत्यंतसंवासः कस्यचित्केनचित्सहः अपि स्वेन शरीरेण किमु
तान्यैः पृथग्जनैरित्यादि महाभारतादिवाक्यानि श्रावयित्वाः पनीतशोकान्बंधुजनान्कुर्युः ततः पुत्रादिर्लगु
डमादाय मृण्मयनवभांडेन जलमानीय ग्रामाद्बहिर्देवतायतने गृहद्वारि वा शुचितीरे वा पिंडदानस्थानादेशा
न्यां दिशि अग्निं प्रज्वाल्य तंडुलप्रसृतिद्वयं प्रक्षाल्य सुशृतं स्वयं पचेत् ततो दक्षिणप्लवणे भूभागे गोमयोपलिप्ते
गौरमृत्तिकया पिंडार्थं दक्षिणप्रवणं स्थानं निर्मीयाचांतः कृतापसव्यो दक्षिणमुखः पातितवामजानुः पिंड ×
त्रय स्थानोपरि दक्षिणाग्रं कुशांमास्तीर्य पुटकादौ जलतिलगंधपुष्पाणि प्रक्षिप्य तत्पात्रं वामहस्ते कृत्वा मोटक
कुशतिलजलान्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत शिरःपूरक प्रथमपिंडस्थाने अत्रावनेनिक्ष्व ते मया
दीयते तवोपतिष्ठतामिति कुशत्रयोपरि अवनेजनं दद्यात् ततस्तिलघृतमधुयुक्तं दुग्धसिक्तं तत्पक्वमेव पिंडमा
दाय मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रपितरमुकप्रेत एष शिरःपूरकः प्रथमः पिंडस्ते मया दीयते
तवोपतिष्ठतामिति कुशोपरि अवनेजनस्थाने पिंडं दद्यात् विहितकालेप्यकृतचूडाकरणस्य विहितकाले
ने प्यकृतोपनयनस्य नेमावेव पिंडं दद्यात् ततः प्रत्यवनेजनदानं ॐ अद्यामुकगोत्रपितरमुकप्रेत शिरःपूरक प्र
थमपिंडे प्रत्यवनेनिक्ष्व ते मया दीयते तवोपतिष्ठतामिति पिंडोपरि पूर्ववद्दद्यात् ततः प्रेतमुद्दिश्य पतूष्णीमेव

२८

वामहस्तान्वारब्धदक्षिणहस्तांगुष्ठतर्जनीमध्यात्मकपितृतीर्थेनदक्षिणाग्रकुशत्रयेणप्रेतगोत्रनाममनीउच्चार्य
म्रतंमनसाध्यायंततःकुशहस्ताःप्रेतायसतिलजलांजलिंदद्युः।ॐअद्यामुकगोत्रपितरमुकप्रेत एष तिलतोया
जलिस्तेमयादीयतेतवोपतिष्ठतामितिवाक्येनततःकेकेतिहूपलवामवृष्टिनाबलिरिवतंपापमितिसंयोगमद्गिलि
खेयुः॥स्त्रियाउदकदानेस्त्रीलिंगेननिर्देशःकर्तव्यःइतिविशेषः।इयंचजलदानक्रियादशमपुरुषपर्यंतक
र्तव्या।समानग्रामवासेयावद्वासंवंधमनुस्मरेयुस्तावन्नपेयेवुः।अस्मुरमातामहमातुलाचार्यशिष्यसहाध्या
यिमित्रदुहितृभर्तृभगिनीभागिनेययाज्ञवल्क्यंजांतद्धितैषिभिःकामयमुदकदानंकर्तव्यं॥पतितापविद्धसर्वगामि
नीवृथासंकरजातिप्रव्रजितात्मत्यागिपाखंडगर्भभर्तृहर्तृसुरापिबद्विजस्त्रीणामुदकक्रियानकर्त्तव्या पतिता
पविद्धक्रियांनकुर्यात् पतितस्यतुस्त्रिमिधन्सर्वगामिनीदत्तवेतनांदासीमाहूयअशुद्धघटहस्तांब्रूयात् हेदासिगच्छ
मूल्येनतिलानानयतसत्वरं तोयपूर्णंघटंत्वंचसतिलंदक्षिणामुखी उपविष्टानुवामेनचरणेनततः द्विपेः कीर्तयेः
पातकीसंज्ञांत्वंपिबेतिवदेर्मुहुः इत्युक्ताचैवंसादासीमृताहनिपातकीसंज्ञांकीर्तयित्वाऽमुकप्रेतत्वंपुनःपुनरभि
धायवामपादेनतोयपूर्णंसतिलंघटमपवर्जयेत् ततउदकदानानंतरमुत्तीर्णान्क्रतवस्त्रांतरपरिधानानाचांतान्।

श्री० २

णस्य विवर्द्धनेन त्वा क्षत्रियकर्तृके वैश्यकर्तृके चानाथब्राह्मणदाहे वैश्यकर्तृके न तु सर्वस्यानाथराजदाहे पि तत्समेध
यज्ञफलस्य सम्फलं। ततस्तृणकाष्ठादि दत्त्वा तं परिक्षिप्य दग्धार्किंचिदवशेषयेत्। ततः प्रादेशमात्रसप्तकाष्ठिकाभिः सह उ
दक्षिणे सप्तकं विधाय कुठारेणोल्मुकोपरि प्रहारसप्तकं कृत्वा। क्रव्यादाय नमस्तुभ्यमित्युल्मुकाएकैकां काष्ठिकामग्नौ
क्षिपेत् अनन्तीक्षाद्दिवं वा तं गंधमाल्यादिभिरलंकृत्य। अहरहर्नयमानो गामश्वं पुरुषं पशून्वैवस्वतो न तृप्यति सुरापा इ
व दुर्मतिरिति यमगाथां गायंतो ग्रामाद्बहिः शुचिदेशे निखनेयुः तत उनोदकदानादिः अथोदकदानादिः॥ तत्रचे
सद्यानन्तरं शव स्य ज्ञातयः शवानुगमनं कृ तत अचितां वामावर्तेन परावृत्त्यापवृत्ते तमनवलोकयमाना अहरहर्नय
मानो गामश्वं पुरुषं पशून्वैवस्वतो न तृप्यति सुरापा इव दुर्मतिरिति यमगाथां गायंतो नदीमवगाह्य जलाशयांतरं वा जलान्त
गे कृत्य गच्छेयुः ततः श्यालकमन्यं वा याचेरन् उदकं करिष्याम इति स ब्रूयात् कुरुध्वं मा चैवं पुनरित्यशतवर्षे ते कु
र्ध्वमेवेतरस्मिन्निति। ततः कृतापसव्या दक्षिणामुखाः प्रकीर्णकेशाः प्रदा ते कृवस्त्रधराः ॐ अप नः शोशुचदघ
मिति वामहस्तानामिकयापो दक्षिणेतो नीत्वा सकृन्निमज्जेयुः ततो वामहस्तानामिकया कनिष्ठकया चाप्रपो विलि
खेयुः। अंगं च न निर्घर्षयुः ततो द्विवाससः आचम्य जले वा पाषाणे पृष्ठे वा शुचितीरदेशे वा दक्षिणाग्रकुशानुत्थाप

३ श्यालकमातुलेनाभिन्निर्वर्तंमन्त्रः ४

फलेद्विजकर्तृकानाथब्राह्मणकर्मकनिर्हरणक्रियासंबंधिकर्तृपदसमसंख्ययज्ञफलसमफलं धनंजयवाक्य
पगमपर्यंतं मृतस्य शनैर्धारणं ॥ द्विजसंस्कारोपयुक्तानितरणकाष्ठहविषां शूद्रकर्तृकानयनं निषिद्धं ॥ द्विजशवस्पृ
ष्टोनस्पृष्टोवा ततः स्नातः पुत्रादिर्दक्षिणशिरसं शवं कृत्वा गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः कुरुक्षेत्रं च गंगां
च यमुनां च सरिद्वरां कौशिकीं चंद्रभागां च सर्वपापप्रणाशिनीं। भद्रावकाशां गंडकीं सरयूं तमसां तथा। वैणवं च वराह
च तीर्थं पिंडारकं तथा। पृथिव्यां यानि तीर्थानि चतुरः सागरांस्तथा। एतानि मनसा ध्यायन् जले सर्वतीर्थान्यावाह्य तेन
जलेन शवं स्नापयित्वा शुचिदेशे यथाविलिखितपरिचयरचितचितायामास्तीर्णकुशायामुत्तरशिरसो धोमुखस्य सवस्त्रस्य पुरुष
ततो स्य स्त्रियाश्चोत्तानदेहाया उत्तरशिरसः स्थापनं कुर्यात्। गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः कुरुक्षेत्रं च गंगां च
शि सर्वपापप्रणाशिनीं। भद्रावकाशां गंडकीं च सरयूं तमसां तथा। वेणवं च वराह च तीर्थं पिंडारकं तथा। पृथिव्यां यानि ती
र्थानि चतुरः सागरांस्तथा। एतानि सर्वतीर्थानि देवाश्चाग्निमुखाः सर्वे कृतस्नानमेनं गता युष्मं दहंत्विति मनसा ध्या
ऽमि त्वा। अपसव्येन दक्षिणमुखो हुताशनं गृहीत्वा। कृत्वा तु दुष्करं कर्म जानता वाप्यजानता। मृत्युकालवशं प्राप्तं न
रं पंचत्वमागतं। धर्माधर्मसमायुक्तं लोभमोहसमावृतं। दहेयं सर्वगात्राणि दिव्यांल्लोकान्स गच्छतु। इति मंत्रमुदीर्य
शीघ्रं प्रदक्षिणं विधाय ज्वलदुल्मुकं शिरोदेशे दानमंत्रश्चायमहृणार्थं तात। स्त्रीदाहे पाविकृत एव पठनीयः। पुं

अं० १

ॐ श्रीरामाय नमः ॐ गणपतये नमः अथ प्रथमक्रिया ॥ ~~[illegible]~~ अत्र गंगादितीर्थे बुभ्रपक्रामि
ष्यज्जीवितस्य त्रैवर्णिकस्य नवयज्ञोपवीतवस्त्रमाल्यादिभिः संभूष्य स्त्रियाश्च यज्ञोपवीतेतरैर्विभूषणं कुशास्त
रणे वस्थानं प्रक्षिप्तापादिकं गंगाजलोद्धरणं गंगामृत्तिकानुलेपनं शालिग्रामशिलासन्निधापनं तुलसीसन्निधापनं विरक्ति
तुलसीपत्रदानं च कर्त्तव्यं तत्रफलाभिलषितया यथाशक्ति गोभूहिरण्यादिदानं तद्द्वारा कारयितव्यं आप्रसूतर पापनाशार्थं
दीपदानं कारयितव्यं जलतुषारयोरन्यतरेण शरीराद्योदककरणं तदसंभवे जलतुषारयोः कपापिका
र्या ॥ ॐमित्येकाक्षरं ब्रह्मव्याहरन् विष्णुस्मरयोरन्यतरस्मिन्परमगतिप्राप्तिः फलमतस्तदर्थिना तत्करणं पुरुष
सूक्तादिश्रावणं अपगतप्राणस्य तस्य मुखनिक्षिप्तकांस्यमानपूर्वालहिरण्यशकलस्य नासिकाद्वयक
र्णद्वय चक्षुर्द्वयनिक्षिप्तसुवर्णशकलमात्रस्य घृततैलसमायुक्तेस्य देहशोधनं विधाय स्नापितस्य वर्हि
षा त्यां भूमौ दक्षिणशिरसा स्वापितस्य घृततैलाभ्युक्षितस्य चंदनोक्षातस्य सर्वांगस्य वस्त्रपिहितमुखस्य
पुष्पैर्विभूषितस्य प्रवृद्धवस्त्रोपवीतिनो गुरुःनेनज्ञोपपुत्रादिर्निर्हरणं कुर्यात् तामृतेहि ज्ञेसजातीयेषु
तिष्ठत्सु नैष्यशूद्रान्नयेयुः नमृतं च द्विजाः ब्राह्मणकर्तृकानाथब्राह्मणकर्मकनिर्हरणे स्वर्गलोकभागिता

शालेक

प्रा०
२६

हावितिवाक्यं तदपि न त्रिदंडसंन्यासपार्वणश्राद्धनिषेधकं एतद्वाक्यस्यैकदंडसंन्यासपार्वणश्राद्धनिषेधकत्वात् तद्दश
नीवाक्येन त्रिदंडानां पार्वणविधानादिति गौडीयश्राद्धविवेकः शास्त्रात् एतद्वाक्येनापि पार्वणविधानात् वस्तुतस्त्वेकोद्दि ए
ह तत्राद्वी निपितामहप्रक्रमक श्राद्धं विधायकादि तेन पतितेसमवर्जिते जीवन्त्येव वा पितरि पार्वणं विधाय कांस्यमव
जितः संन्यासी अथानधिकारिणः महापातकिनश्चारदंडन्वन्वयुः स्तेनाः ब्रात्याः मातापित्रोरान्दा वेश्रुरूपादयो
याना मन्यगोवध हन्तृ हननादीनां संचारिणां दानं न भवति अथोदकदानादिकं नहिः अयथाविधसंन्यासेन पतिताः सं
वेदविलितपञ्चयाकर्तारः शास्त्राविहितदेहत्यागकारिणः पाखंडाश्रितास्त्रियः गर्भभर्तृद्रुहः मद्यपा
स्त्वैरिणीकास्त्रियः वृथासंकरजाताः दीनानुदकदानादिनेकर्तव्यमेतेषां वादावरीशर्मादिपदं योज
येति केचित् केचिन्नयोजयन्ति तदुसपिण्डेकरणपार्वणे प्रेत प्रेत इति स्मृतः सपिण्डीकरणादूर्ध्वं
प्रागेवमादिशब्दभाक् इति वाक्यं श्रमात्मायाति तथास्माकमुत्तरः पद्यः प्रथमः पारे छेदः ॥

गृहस्थाश्रमस्थ्या च स्वधर्मत्यागिनो निंदितकर्मकर्तारः गर्भभर्तृद्रुहः स्त्रियः मद्यपा स्वैरिणीकास्त्रि

10

तद्दिन एवास्थिसंचयः कर्त्तव्यः असंपूर्णे शौचांतरे तु तृतीयभागोत्तरमस्थिसंचयो गस्पर्शश्च कर्त्तव्य इति,
अथ प्रयोगः चतुर्थदिने स्नात्वा चतुर्थपिंडं दत्वा श्राद्धदेशस्य गोमयोपलेपनं पंचगव्योपलेपनं ज्वलदंगारभ्र
मणं गोरमृत्तिकाच्छादनानि कारयित्वा गौरसर्षपैस्तिलैश्चाविकरणं स्वयं च श्राद्धकर्त्ता पाकमारभेत ततः सि
द्धेन्ने रत्नादीपं संस्थाप्य श्राद्धदेयानि वस्त्रान्यासाद्य आचम्य पूर्वाभिमुख उपविश्य ॐ अपवित्रः पवित्रो वेत्या
दि पठित्वा पुंडरीकाक्षः पुनात्विति आत्मीयवस्तूनां कुशत्रयजलेनासेचनं ततः ॐ अद्यामुकगोत्रस्य पितुरमुक
प्रेतस्यास्थिसंचयनिमित्तकमेकोद्दिष्टश्राद्धमहं करिष्ये इति संकल्पं कुर्यात् ततस्त्रिर्गायत्रीं जपित्वा ॐ देवता
भ्य इति त्रिर्जपेत् ततोपसव्यं कृत्वा मोटकजलतिलान्यादाय दक्षिणामुखः सव्यजानुं पातयित्वा ॐ अद्यामुकगो
त्र [illegible] पितरमुकप्रेत [illegible] अस्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठतामित्यासनं
मोटकरूपमुत्सृजेत् ततः ॐ अपहता असुरा रक्षांसि वेदिषद इति श्राद्धदेशे वामावर्त्तेन तिलान्विक्षिपेत् ततः
ॐ आयंतु न इतिमंत्रं जपेत् ततः पुटके कुशपत्रद्वयं प्रादेशमात्रं दक्षिणाग्रं धृत्वा ॐ शन्नो देवीरभिष्टय इति तत्र
जलं दद्यात् ॐ तिलोसि इति तिलान्दद्यात् तूष्णीं गंधपुष्पं क्षिपेत् ततस्तदर्घपात्रं वामहस्ते कृत्वा कुशपत्रद्वयं प

त्रै० क्रि

६

रिवेषणपात्रे उत्तराग्रं धृत्वा तदुपरि किंचिदुदकांतरं दत्वा ॐ यादिव्या आप इति पठित्वा मोटकादीन्यादाय ॐ अद्या
मुकगोत्र पितरमुकप्रेत अस्थिसंचयनिमित्ते कैकोद्दिष्टश्राद्ध एष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति पवि
त्रोपरि अर्घजलं तदुत्सृजेत् ततः पवित्रद्वयसहितमर्घपात्रमासनवामपार्श्वे पित्रे स्थानमसीति अधोमुखं कृ
त्वा स्थापयेत् ततो मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत संचयनिमित्तके कोद्दिष्टश्राद्धे एतानि
गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि ते मया दीयंते तवोपतिष्ठंतामिति गंधादीनि दद्यात् ततो जले
नासनपात्रे [illegible] चतुरस्रं मंडलं कृत्वा [illegible] पात्रे अग्रभागस्य घृतव्यंजनतिलजलं ॐ इदमन्नमेतद्भू
स्वामि पितरः [illegible] ततो हस्ताभ्यां [illegible] पात्रमन्नं [illegible] मादाय मनाक् स्थित्वा पितरं ध्यायन् पु
रुषयत्त्व [illegible] अन्नोपरि मधु दत्वा ॐ मधुवाता इत्यादि ऋच ॐ म
धु मधु मधु इति च जपेत् ततो [illegible] हस्ताभ्यामधोमुखाभ्यां पात्रमालभ्य ॐ पृथिवी ते पात्रमिति जपेत्
ततः [illegible] इति जपेत् ततः ॐ अमुकस्य इदमन्नं मदीयमिति पठित्वा ॐ इदमन्नं ॐ इमा आपः ॐ इदं
माज्यं ॐ इदं हविरिति अन्नजलघृतान्यु दक्षिणहस्तांगुष्ठं निवेश्य ॐ अपहता इति तिलानन्नोपरि क्षि
प्त्वा।

अस्थि

३१

प्रादेशमात्रेकुशाद्य



वामहस्तेन पात्रमत्यजन् दक्षिणहस्तेन मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुक प्रेत अस्थिसंचय
निमित्तकैकोद्दिष्टश्राद्धे इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत् ततो गायत्री मधुवाता
इति मन्त्रं च ॐ मधु मधु मधु इति च ॐ अन्नहीनं क्रियाहीनं इति च जपेत् ततः कुशेषूपविश्य गायत्री मधुवाता
इत्यादिकं च जपेत् ततः ॐ कृणुष्व पाजः इत्यादि रक्षोघ्नी ॐ उदीरतामित्यादि पितृमन्त्रान् पुरुषसूक्तमप्र
तिरथमन्त्यानि च पवित्राणि यथाशक्ति जपेत् ॐ नमस्तुभ्यमिति श्लोकं च पठेत् ततउच्छिष्टसन्निधावास्त
तकुशत्रयोपरि भूमिं जलेन प्रोक्ष्य तिलयुक्तं सर्वान्नं जलसहितमन्नं जलेनाप्लाव्य ॐ अग्निदग्धाश्च ये जीवा ये प्रद
ग्धाः कुले मम इत्यादि मन्त्रेण कुशोपरि अन्नं विकिरेत् ततः सव्यं कृत्वाचम्य हरिं स्मृत्वापसव्यं कृत्वान्न
पात्रसमीपे पिंडदानार्थं मृन्मय्यां वेदिकायां मध्ये प्रादेशमात्रं परिमाय वामान्वारब्धदक्षिणहस्तेन ॐ अपह
ता इत्यादिना तद्विलिख्य दर्भपिंजली मुत्तरस्यां दिशि परेखोपरि ॐ ये रूपाणि इति मन्त्रेणोल्मुकं भ्रामयित्वांगा
रं दक्षिणतः क्षिपेत् ततो रेखोपरि छिन्नमूलान्कुशान् आस्तीर्य ॐ देवताभ्य इति सव्येन पुटके जलतिल
गंधपुष्पाणि क्षिप्त्वा पुटकं वामहस्ते कृत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्र प्रेतास्थिसंचयनिमि
त्तकैकोद्दिष्टश्राद्धपिंडस्थाने अत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठतामिति कुशोपरि अवनेजनजलं किं

त्रिर्जपेत् ततोपस

अ॰
सं॰
७

ॐ

चिद्द्यात् ततः घृतमधुतिलयुक्तेनान्नेन पिंडं निर्माय घृतमध्वभिघारितं पिंडं मोटकादीनि चादाय ॐ अद्यामुक
गोत्रपितरमुकप्रेतास्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धे एष पिंडस्ते मया दीयते तवोपतिष्ठतामिति कुशोपरि वा
मान्वारब्धदक्षिणहस्तेन पिंडं दद्यात् ततः आस्तृतकुशमूले तूष्णींकरं प्रोक्ष्य सव्यं कृत्वाचम्यापसव्यं कृत्वा ॐ
अत्र पितर्मादयस्वेत्यादिमंत्रं पठित्वा उत्तराभिमुखीभूय श्वासनिरोधं कुर्वन् पितरं भासुरमूर्तिं ध्यायन् अमीम
दंत पिता मादयस्वेत्यादिना कुहेन जपेत् ततः पूर्वावशिष्टजलमवनेजनपात्रं वामहस्ते कृत्वा मोटकादीन्यादा
य ॐ अद्यामुकगोत्रपितरमुकप्रेतास्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धपिंडे प्रत्यवनेनिक्ष्व ते मया दीयते तवो
पतिष्ठतामिति प्रत्यवनेजनं दद्यात् ततो नीवीं विस्रंस्य सव्यं कृत्वाचम्य हरिं स्मृत्वा वामहस्तेन सूत्रमादाय
कराभ्यां तद्गृहीत्वा एतत्ते पितर्वासः इति सूत्रं पिंडोपरि धृत्वा ॐ अद्यामुकगोत्रपितरमुकप्रेतास्थिसंचयनि
मित्तकैकोद्दिष्टश्राद्धपिंडे एतद्वासस्ते मया दीयते तवोपतिष्ठतामिति मोटकादि नं दद्यात् ततः पिंडं गंधपुष्प
धूपदीपतांबूलैरभ्यर्च्य पिंडशेषान्नं पिंडसमीपे विकिरेत् ॐ शिवा आपः संतु ॐ सौमनस्यमस्तु ॐ अक्षतं
चारिष्टमस्तु इत्यन्नपात्रे जलादीन् दत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्यास्थि
संचयनिमित्तकैकोद्दिष्टश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठतामित्युत्सृजेत् ततः सव्यं कृत्वा दक्षिणां दिशं प

ततः पूर्वाभिमुखः ॐ गोत्रंनोवर्द्धतां ॐ दाता॰
श्यन् ॐ अघोरःपितास्त्वितिपिंडोपरि पूर्वाग्रांजलधारांदद्यात् ततः पूर्वाभिमुखः ॐ गोत्रंनोवर्द्धतां ॐ दाता॰
रोभिवर्द्धंतांवेदाःसंततिरित्यादिनाशिषोयाचेत् ततोपसव्यंकृत्वा पिंडोपरि सपवित्रान्कुशानास्तीर्यपुट
कादिजलेन ॐ ऊर्ज्जंवहंतीरित्यादिपठित्वाकुशोपरि दक्षिणाग्रांजलधारांदद्यात् ततःपिंडमाघ्रायोत्थाप्यये
त् छिन्नमूलकुशानंगारंचाग्नौदहेत् अर्घपात्रमुत्तानीकृत्वा मोटकादीनिदक्षिणाद्रव्यंचादाय ॐ अद्यामुक
गोत्रस्यपितुरमुकप्रेतस्यकृतैतदस्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतंयथा॰
नामगोत्रायदक्षिणांदातुमहमुत्सृजेइतिदक्षिणांदद्यात् ततःसव्येन त्रिर्देवताभ्यइतिजपित्वापसव्यंकृ
त्वादीपंनिर्वाप्यहस्तौपादौप्रक्षाल्यसव्येनाचम्य ॐ प्रमादादितिपठित्वाविष्णुंस्मरेत् आत्मीयवस्त्रंक्षाल
नानाविधफलमूल॰
णायप्रतिपादयेत्जलेवाक्षिपेत् ततःपुत्रादिज्ञातिबंधुमिलितःस्नातःसुधौतवस्त्रो
भक्ष्यपानादिभिःस्वजात्यनुरूपैरष्टौपात्राणिपूरयित्वागंधपुष्पधूपदीपादिकंचगृहीत्वाश्मशानसमीप॰
मागत्यतत्रान्वितैःकैश्चिदर्घैःकैश्चित्पुष्पैःकैश्चिद्भोजनैःकैश्चिद्दीपैःकैश्चिन्माल्यैःकैश्चित्पानीयैःकैश्चि
द्दत्तैःसर्वंनिवेदयेत्कोश्चिन्निरहंकारयुक्तैःसमंततश्चतुर्षुअन्नादिपूर्णपात्रेषुनिवेदितेषुप्रथमंचितायां
उत्तरद्वारसमीपेउपविश्य ॐ नमःक्रव्यादमुखेभ्योदेवेभ्यइतिसर्वदा येस्मिन्श्मशानेदेवाःस्युर्भगवंतःसना

अं·
क्री·
८

ततः तेस्मात्सकाशाद्गृह्णंतु बलिमष्टांगमक्षयं प्रेतस्यास्य शुभांल्लोकान्प्रयच्छंतु च शाश्वतान् अस्माकमायुरा
रोग्यं सुखं च ददतां वरं इति पठित्वा ॐ एषोष्टांगबलिः शंकरादिदेवताभ्यो नमः इत्येकं बलिं दद्यात् एवं प्रदक्षि
णक्रमेणापरं बलित्रयं त्रिषु द्वारेषु दत्त्वा तान्बलीन् क्षीरेणाभ्युक्ष्य शंकरादिदेवताः स्वीयस्वीयस्थानं गच्छंतु
इति देवता विसृज्य क्षीरेणावाग्यतः चितास्थीन्यभ्युक्ष्य प्रथमं शिरोस्थीनि शमीपलाशशाखाभ्यामुद्धृ।
त्योद्धृत्याज्येनाभ्युक्ष्य गंधवारिणा सिक्त्वा कृतापसव्यो दक्षिणांगुष्ठकनिष्ठाभ्यां गृहीत्वा ततोन्यान्यपि।
अस्थीनि गृहीत्वा पंचगव्येन सुगंधिवारिणा सिक्त्वा पलाशपुटे निक्षिप्य क्षौमवस्त्रेण संवेष्ट्य मृण्मये नूत।
न भांडे साच्छादने निदध्यात् तद्भांडमरण्ये वृक्षमूले वा पंकशैवालयुतगर्ते वा निभृतं धापयेत् चिताभस्मादि
तोये निक्षिपेत् गोमयांबुमिश्रितां भूमिशुद्धिं विधाय पूर्ववच्चतुर्दिशं शंकरादिदेवताभ्यो बलीन् घृतादियुक्तान् — क
नमः क्रव्यादमुखेभ्य इत्यादिमंत्रेण दद्यात् तान्विसृजेत बल्यन्नमंतेभ्यो दद्यात् अंभसि वा क्षिपेत् ततश्चि
तां भूमेराच्छादनार्थं वृक्षः पुष्करकः पट्टको वा कारयितव्यः पुष्करइष्टिकानिर्मितदेवकुमठकाकारं गृहं ततः — ति
सचैलो बंधुभिः सह स्नायात् अन्यः कश्चित्पुत्रपौत्रसहोदरादिर्गंगातीरं नीत्वा स्नात्वा तान्यस्थीनि पंचगव्येन — प्रति
प्रोक्ष्य हिरण्यमध्वाज्यतिलैः संयोज्य मृत्पिंडपुटे निधाय दक्षिणां दिशं पश्यन् ॐ नमोस्तु धर्मायेति वदन् ज

३३

लं प्रविश्य प्रेतगतस्वर्गकामो दक्षिणामुखः स मे प्रीतः इत्युक्त्वा गंगांभसि निक्षिपेत् ततः स्नात्वोत्थाय सूर्यं प-
श्येत् तत आचम्य ॐ अद्य कृतैतदस्थिप्रक्षेपप्रतिष्ठार्थं इदं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय
दक्षिणां दातुमहमुत्सृजे इति दक्षिणां दद्यात् एवं कृते प्रेतस्य रस्थितस्य स्वर्गगतिः स्यात् मह हेंद्रतुल्या यावदस्थि
मनुष्यस्य गंगातोयेषु मज्जति तावद्वर्षसहस्त्राणि स्वर्गलोके महीयते गंगातोयेषु यस्यास्थि प्लवते शुभकर्मणः
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कथंचन गौडाः दशाहाभ्यंतरे यस्य गंगातोये स्थि मज्जति गंगायां मरणे यादृ
क्तादृक्फलमवाप्नुयात् ब्रह्मपुराणे मातुः कुलं पितृकुलं वर्जयित्वा नराधमः अस्थीन्यन्यकुलोत्थानि नी
त्वा चांद्रायणं चरेत् एवं च मातृकुलं न्यकुलोत्थस्याप्यस्थ्नो नयने धर्मबुध्यादोषाभावः अथाचारान्निरग्ने
रप्यस्थिपर्णनरदाहः दाह्यशरीरालाभे तदस्थिघृतेनाभ्युक्ष्य वस्त्रेणाच्छाद्य दहेत् अस्थ्नामप्यलाभे षष्ट्यधि
कपलाशपत्रशतत्रयेण पुरुषाकृतिं विन्यस्य ॐ असौ स्वर्गाय लोकाय स्वाहेति दहेत् उदकधारां च दद्यात्
तद्विन्यासप्रकारस्तु शिरस्य शीत्यर्द्धं दद्याद्ग्रीवायां तु दशैव तु बाह्वोश्चैव शतं दद्यादंगुलीषु तथा दश उरसि
त्रिंशतं तथा दद्याद्विंशतिं जठरे तथा अष्टार्धं शिश्ने दद्याद्द्वादशार्द्धं वृषणयोः ऊर्वोश्चैव शतं दद्यात् त्रिंशतिं
जानुजंघयोः पादांगुलीषु दश दद्यादेतत्पत्रविकल्पनं अनाहिताग्निदेहस्तु दाह्योगृह्याग्निना द्विजैः तद
लाभे पलाशोत्थैः पत्रैः कार्यः पुमानिति शतैस्त्रिभिस्तथा षष्ट्या शरव्रातैर्विधानतः वेष्टितव्यस्तथा यत्नात्

हादशाह स्मान ग्निस्त्व्र उपवन संशयदृति

२ मरणं वर्माना ब्राह्मणः विद्यते येषां तैः पत्रैः



अग्निहोत्र २

घृतेष्टि ५
त्रि के ण
ध ट त्रिंशति
५ नौ
दे ह

श्रा॰ वि॰
९

कृष्णसारस्यचर्मणा ऊर्णासूत्रेणबध्वाप्यप्रलेपव्यस्तयावैः स्वपिष्टैर्जलमिश्रैश्चप्रदग्धव्यस्तथाग्निना
अमौस्वर्गायलोकायस्वाहेत्युक्तास्वबांधवैः एवंपर्णनरंदग्ध्वात्रिरात्रिमशुचिर्भवेत् तुल्यन्यायतया
स्थिदाहेपित्रिरात्राशौचं एवंकृतेमृतभ्रांत्यायद्यागच्छेत्समान्कचित् कुर्यादस्यायुषिष्टिंपुनरादाय
पादकं साग्रेरियमिष्टिः निरग्नेस्तुशांतिस्वस्त्ययनमन्यदिति अथाशौचांतदिनकृत्यं तत्राशौचांतपूर्व
दिनेसर्वबांरजकद्वारावस्त्रशुद्धिंकारयित्वा अथाशौचांतदिवसेगृहशुद्धिंकृत्वामृण्मयपाकभांडानि
त्यक्त्वादशमंपिंडंदत्वास्नात्वाबहिरुदकांतेकेशलोमनखान्यथायोग्यंवापयित्वातिलतैलेनास्नात्वागौरस
र्षपकल्केनशिरश्चोन्मृज्यस्नात्वाप्रेतस्पृष्टवासांस्यंतेभ्यःप्रश्रितेभ्योदत्वाचम्यवाग्यतोवासोयुग्ममहतंनवं
शुद्धंपुरातनंवाशुक्लमव्रणंपरिधाय अश्माग्निंगांसुवर्णंगोरोचनंदधिदूर्वासितसर्षपंब्राह्मणाग्निंस्त्रियो
वाहनायुधंवैश्यःप्रतोदप्रग्रहौशूद्रोयष्टिंसंस्पृश्यमंगलानिसंकीर्त्यब्राह्मणान्स्वस्तिवाचयित्वागृहंप्रविशेत्
अत्रदिनेब्राह्मणाःपंचगव्यपानंकुर्वंतीतिसमाचारः इतिश्राद्धविवेकेप्रथमक्रियापरिच्छेदो द्वितीयः २ अथैका
दशाहश्राद्धनिमंत्रणादि तत्रादौशौचांतदिनेनिरामिषमेकवारंभुक्त्वारात्रौसर्वभुक्तेजनेगृहेविप्रनिवेशनंगत्वा
गोमयोपलिप्तेदक्षिणाप्रवणभूमौब्राह्मणमुदङ्मुखमुपवेश्यकृतापसव्योदक्षिणाभिमुखोनामितवामजानुः
ॐगतोसिदिव्यलोकंत्वंकृतांतविहितात्पथः मनसावायुभूतेनविप्रेत्वाहंनियोजये पूजयिष्यामिभोगेनइति

९
३४

प्रेतोद्देशेनपठित्वापुष्पचंदनतांबूलानिब्राह्मणायदत्त्वाब्राह्मणजानुंस्पृष्ट्वा ॐअस्यांरात्रौअमुकगोत्रस्यपि
तुरमुकप्रेतस्यस्वःआद्यश्राद्धकरणायभवंतंब्राह्मणमहमामंत्रयेइत्यामंत्रयेत् आमंत्रितोस्मीतिब्राह्मणेनोक्ते
ॐअक्रोधेनशौचपरेणसततंब्रह्मवादिना भवितव्यंभवताचमयाचश्राद्धकारिणा ॐसर्वायासविनिर्मुक्तेन
कामक्रोधविवर्जितेनभवितव्यंभवतानःश्वस्तनेश्राद्धकर्मणि इतिब्राह्मणमुद्दिश्यपठेत् यद्यविघ्नेनरजनीया
स्यतितदासर्वमेतत्करिष्यामीतितेनोक्ते ॐइदंतेपाद्यमितिपाद्यंदत्त्वाद्विजंनमस्कृत्यप्रेतहितमुद्दिश्यतिलतैले
नाजानुविप्रपादौप्रक्षालयेत् अत्रस्त्रियाअप्युद्देश्यत्वे ॐगतोसीत्यविकृतमेवपठनीयमात्मत्वेनोद्देश्यत्वात् अ
थैकादशाहेवहिर्नदीतीरादौप्रातःश्वेतवस्त्रयुगेनस्नात्वासूर्योदयेपात्रब्राह्मणस्यश्मश्रुकर्मनखछेदनंच
कारयेत् ताम्रपात्रेणतैलोद्वर्तनेस्नानोपकरणंचदद्यात् स्वयंस्नात्वाकृतनित्यक्रियोनदीतीरेगृहेवाश्राद्धभू
मिंपरिकल्प्यपंचगव्येनोपलिप्यज्वलदंगारैःसंशोध्यगौरमृत्तिकयाक्षाद्यतिलैःसर्षपैश्चविकरेत् गोमयोप
लिप्तावृतपाकस्थानेतिलान्विकीर्य्यपरितःछागान्बंधयित्वा तत्रसपिंडद्वारास्वयंवानूतनमृण्मयभांडैःपा
कमारभेत् ततआचांतःपूर्वाभिमुखःउदङ्मुखायशय्यांदद्यात् ततःॐसोपकरणशय्यायैनमः ॐब्राह्मणाय
नमःइतिदेयब्राह्मणौत्रिःसंपूज्य ॐइमांसोपकरणांशय्यांतेददानीतिद्विजकरेजलदानं वारिणाशय्यामि

१९

श्रे॰ दी॰ १०

षेचनं ततः कुशत्रयजलान्यादाय ॐ अद्याशौचांतद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकाम इमां
सोपकरणशय्यां विष्णुदैवताममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात् ॐ स्वस्ति इति प्रतिव
चनं ततः कुशत्रयतिलजलानि दक्षिणाद्रव्यं चादाय ॐ अद्य कृतैतत्सोपकरणशय्यादानप्रतिष्ठार्थमिदं हिरण्यमग्निदै
वतं अमुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इति दद्यात् ततः प्रतिगृहीता ॐ स्वस्तीति उक्त्वा सो
पकरणां शय्यां स्पृशेत् ततआचम्य ॐ फलवस्त्रसमन्वितकांचनपुरुषाय नमः ॐ ब्राह्मणाय नमः इति देयब्राह्मणौ विः
संपूज्य ॐ इमं फलवस्त्रसमन्वितं कांचनपुरुषं ॐ ब्राह्मणाय ददानीति द्विजकरे जलदानं वारिणा देयद्रव्यसेचनं कु
शत्रयादीन्यादाय ॐ अद्याशौचांतद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकाम इदं फलवस्त्रसमन्वि
तकांचनपुरुषं विष्णुदैवतं अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात् ॐ स्वस्तीति प्रतिवचनं
ततो दक्षिणाद्रव्यादिकमादाय ॐ अद्य कृतैतत्फलवस्त्रसमन्वितकांचनपुरुषदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवत
ममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इति दद्यात् प्रतिगृहीता स्वस्तीत्युक्त्वा कांचनपुरुषं स्पृ
शेत् ततआचम्य कुशत्रयतिलजलान्यादाय ॐ अद्याशौचांतद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्रा
प्तिकामो द्विजदंपती अहं पूजयिष्ये इति संकल्प्य द्विजदंपती पूजयेत् तत्र क्रमः एषोऽर्घः ॐ द्विजदंपतीभ्यां नमः इदमनुलेपनं

ॐ द्विजदंपतीभ्यां नमः इत्युभयोः पादयोस्त्रिःपूजां कुर्यात् ततः पुष्पजलाभ्यामेतानि धूपदीपतांबूलनैवेद्यसिंदूरवि
भूषणवासांसि ॐ द्विजदंपतीभ्यां नमः इति दद्यात् तौ नमस्कुर्य्यात् एतच्च द्विजदंपतीपूजनं प्रधानत्वाद्वृषोत्सर्गाकर	21
णेपि कर्त्तव्यं शय्यादानवदिति अथ वृषोत्सर्गप्रयोगः ततः वृषोत्सर्गसंभृतिं विविक्तनिर्जनवनगोमध्यप्रागुदकप्रव
णदेशं नयेत् ततआचांतः पूर्वाभिमुख उपविश्य कुशत्रयतिलजलान्यादाय ॐ अद्याशौचांतद्वितीयेह्नि अमुकगो
त्रस्य पितुरमुकप्रेतस्य मोक्षकामः सोपकरणवत्सतरीचतुष्टयसहितवृषोत्सर्गमहं करिष्ये इति संकल्पं नीलवृष कुर्यात
प्राप्तौ नीलपदप्रक्षेपः कर्त्तव्यः कार्त्तिक्यां वृषोत्सर्गे ॐ अद्य कार्त्तिक्यां तिथौ अमुकगोत्रस्य पितुरमुकशर्मणो मोक्षका
त मोःपृणान्दत्वा सोपकरणवत्सतरीचतुष्टयसहितवृषोत्सर्गमहं करिष्ये इति संकल्पविशेषः वत्सतर्य्येकपक्षे चतु
ष्टयपदस्थाने अष्टकपदप्रक्षेपः ततउत्तराभिमुखं ब्राह्मणमुपवेश्य ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कर्त्तव्यवृ
षोत्सर्गांगभूतहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्त्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंद
नतांबूलवस्त्रयुग्महेमालंकरणैर्ब्रह्मत्वेन त्वामहं वृणे इति ब्राह्मणं वृणुयात् ॐ वृतोस्मीति प्रतिवचनं ॐ यथाविहि
तं कर्म कुरु इति यजमानस्तमुद्दिश्य वदेत् ॐ करवाणीति प्रतिवचनं तत ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य क
र्त्तव्यवृषोत्सर्गांगभूतहोमकर्मकर्त्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलहेमालंकरणवासोभिर्हो

तेधंतेगीताकुशान्बर्हिषउप्यंते

त्वेनत्वामहंवृणे इत्याचार्यंवृणुयात् ॐवृतोस्मीति प्रतिवचनं ॐयथाविहितं कर्म कुर्विति यजमानस्तमुद्दिश्य वदेत् ॐक
श्रौ. रवाणीति तत्प्रतिवचनं ततोहोताचांतो गोमयोपलिप्तवेदिकायां प्राङ्मुख उपविश्य पुरतः कुशैर्हस्तमात्रं चतुरस्रं परि
स्मा. समुह्य कुशानैशान्यां क्षिप्त्वा गोमयोदकेनोपलिप्य मध्ये प्रादेशमात्रमुत्तरोत्तरक्रमेण स्रुवमूलेन त्रिरुल्लिख्य उल्लेखन
११ मृद क्रमेण दक्षिणांगुष्ठानामिकाभ्यां संगताभ्यां मृदमुद्धृत्य ऐशान्यां तत् क्षिप्त्वा तं देशं जलेनाभ्युक्ष्य तत्र दक्षिणहस्तस्थकांस्येन
तूष्णीमग्निं स्थापयेत् अग्नेर्दक्षिणतः परिस्तरणं भूमिमतिक्रम्य शुद्धमासनमुपकल्प्य तत्र प्रागग्रकुशैस्तरणं विधा
य य ब्रह्माणमग्नेर्वायव्यां प्रदक्षिणमानीय कल्पितासने बर्हिर्हस्तं स्तमुदङ्मुखमुपवेशयेत् ततोग्नेरुत्तरतः स्तरणं भूमिम
तिक्रम्य कुशत्रयमास्तीर्य तत्र सांतरालमत्पात्रस्य बर्हिषाच्छादितं सर्वकार्यार्थमुदकं क्षीरं च ब्रह्मणो मुखमवलो
क्य निदध्यात् तत उपमूललूनबर्हिषां मुष्टिं चतुर्थभागेनाग्नेयादीशानांतं प्राच्यां ब्रह्मणोग्निपर्यंतं दक्षिणस्यां नैरृ
त्याद्वायव्यांतं पश्चिमायामग्नितः प्रणीतापर्यंतं उत्तरस्यां स्तरणं कुर्यात् तत आसादनमुपयोक्ष्यमाणानामग्नेरुत्तर
तः प्रणीतापश्चिमे प्राक्संस्थमुदक्संस्थं वा तद्यथा पवित्रच्छेदनार्थं कुशत्रयं पवित्रार्थमनंतर्गर्भिणं साग्रं कुशपत्र
द्वयं प्रोक्षणार्थं मृत्पात्रं आज्यार्थं ताम्रस्थालीं पायसार्थं मृत्तिकास्थालीं स्रुवसंमार्जनार्थं कुशत्रयं उपग्रहार्थं वेणी
रूपकुशत्रयं प्रादेशमितपलाशसमिधत्रयं स्रुव आज्यं तंडुलाः दुग्धं एवमासाद्य तदुत्तरतः पोल्लं सिद्धमेव पिष्टमयं
चरुं ब्रह्मदक्षिणार्थं पूर्णपात्रं होतृदक्षिणार्थं वस्त्रयुगं सुवर्णकांस्यान्युपकल्पयेत् ततो वाग्यत आसादितकुशपत्रद्व

त लूना
अनंतर्गर्भरहितं

यमादायपवित्रछेदनकुशैः प्रादेशमात्रंसमायछिन्नातानपास्यपवित्राभ्यांप्रणीतोदकंचोत्पूयसपवित्रकरेणप्रणी

तोदकंत्रिःप्रोक्षण्यांनिधायउदग्रपवित्रेव्यस्तयोरंगुष्ठानामिकाग्राभ्यामंतयोराधायतन्मध्येनप्रोक्षण्युदकंभूमौ ९

त्रिःक्षिप्त्वापवित्रेप्रोक्षण्यांनिधायतत्पात्रंदक्षिणहस्तेनादायवामेनिधायदक्षिणहस्तानामिकांगुष्ठाभ्यांतज्जलंकिं

चिदूर्ध्वमुत्क्षिप्यप्रणीताजलेनप्रोक्षणीमभिषिंच्यतज्जलेनयथासादितंद्रव्यप्रत्येकंसकृत्प्रोक्ष्यपवित्रशेषजलस

हितपात्रंप्रणीताग्न्योरंतरेनिधायाज्यस्थाल्यामाज्यंनिरूप्यचरुस्थाल्यांतंडुलान्निक्षिप्यप्रणीतोदकेनतांस्त्रिःप्र ×

क्षाल्यतत्रप्रणीतोदकंदुग्धंचप्रक्षिप्यस्वयंचरुंब्रह्मणाचाज्यंगृहीत्वाप्रदक्षिणीकृत्याग्निपूर्वेणनीत्वादक्षिणतआ ८

ज्यमुत्तरतःपायसंचरुंपचनार्थंयुगपदग्नौनिधायोल्मुकंसहविष्काग्नेःप्रदक्षिणंभ्रामयित्वातत्रैवक्षिप्त्वास्रुवस्यप्राग ८

ग्रस्यप्राङ्मुखस्याग्नौप्रतपनमुत्तानस्यसंमार्जनंकुशैरंतरतोग्रान्मूलपर्य्यंतंमध्यैर्मध्यतएवंमूलैर्वाह्यतोमूलादग्रप

र्यंतंसंमार्जनंप्रणीताद्भिरभ्युक्षणंपुनःप्रतपनंस्रुवस्तत्तवर्हिर्विस्यपुरुतःप्रागग्रस्यस्थापनंविधाय पाकेवृत्तेस्वयमाज्य

मुद्वास्याग्निपश्चिमेननीत्वाप्रणीतोत्तरतःप्रथमंनिधायचरुंतथैवोद्वास्याज्यपश्चिमेननीत्वाज्योत्तरतोनिधायस्वपुरु

तःस्रुवोत्तरेआज्यंतदुत्तरतश्चरुंनिधायप्रोक्षणीतःपवित्रेसमानीयआज्येप्रोक्षणीवदुत्पवनंपवित्रेप्रोक्षण्यांनिधा

यआज्यमवेक्ष्यसत्यपद्रव्येतन्निरस्यप्रोक्षण्युत्पवनंनिधायपायसचरोरुत्तरतःपूर्वसिद्धपिष्टकचरुंनिधायहोमस

माप्तिपर्य्यंतमुपग्रहार्थंकुशैर्वामहस्तेउपग्रहंविधायप्रजापतिंचिंतयन्नुत्तिष्ठन्प्रागग्रघृताक्तसमित्त्रयंप्रक्षिप्योपवि

पपसचरु प्र.मी.पा.सि.

अपप्रोक्ष्य द्भिः सहविष्कमग्निं प्रणीताब्रह्मसहितं पर्युक्ष्य पवित्रे प्रणीतासु निधाय प्रोक्षणीपात्रं स्वस्थाने निदध्या
त् ततो ब्रह्मणाकर्वर्हिषान्वारब्धो दक्षिणं जानुं नमयित्वा संस्रवं विनैवाज्येनजुहुयात् स्वाहान्तो होमः इदमग्नये
इति त्यागः ओं इह रतिः स्वाहा इदमग्नये ओं इह रमध्वं स्वाहा इदमग्नये ओं इह धृतिः स्वाहा इदमग्नये ओं इह स्वधृतिः
स्वाहा इदमग्नये ओं उपसृजं धरुणं मात्रे धरुणो मातरं धयन् स्वाहा इदमग्नये ओं रायस्पोषमस्मासु दीधरत् स्वाहा
इदमग्नये ततः प्राक् स्रुजुअग्नेर्दक्षिणभागे मनसा ओं प्रजापतये स्वाहा इदं प्रजापतये अग्नेरुत्तरभागे स्रुजु प्राक् ओं इन्द्रा
य स्वाहा इदमिन्द्राय ततउत्तरपूर्वार्द्धे ओं अग्नये स्वाहा इदमग्नये दक्षिणपूर्वार्द्धे ओं सोमाय स्वाहा इदं सोमाय इत्याघा
रावाज्यभागौ ससंस्रवं हित्वा पायसं पिष्टमेकमादाय समिद्धत मौ संस्रवं विनैव पायसेनजुहुयात् ओं अग्नये स्वा
हा इदमग्नये ओं रुद्राय स्वाहा इदं रुद्राय ओं शर्वाय स्वाहा इदं शर्वाय ओं पशुपतये स्वाहा इदं पशुपतये ओं उग्राय स्वा
हा इदमुग्राय ओं अशनये स्वाहा इदमशनये ओं भवाय स्वाहा इदं भवाय ओं महादेवाय स्वाहा इदं महादेवाय ओं ईशा
नाय स्वाहा इदमीशानाय इति हुत्वा पिष्टकेन ओं पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः पूषा वाजं सनोतु नः स्वाहा इदं
पूष्णे ततः पायसपिष्टकाभ्यामुत्तरार्द्धावदानभृताभ्यां अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते अग्नेर्मध्य
भागे वाज्येन ओं भूः स्वाहा इदं भूः ओं भुवः स्वाहा इदं भुवः ओं स्वः स्वाहा इदं स्वः ओं तन्नो अग्ने वरुणस्य विद्वान्देव
स्य हेडो अवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् स्वाहा इदमग्नीवरुणाभ्यां ओं स

३२

त्वन्नोअग्नेऽवमोभवोती नेदिष्ठोअस्याउषसोव्युष्टौअवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनएधिस्वाहा इद
मग्नीवरुणाभ्यां ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्वमयाअसिअयानोयज्ञꣳवहास्ययानोधेहिभेषजꣳ
स्वाहा इदमग्नये ॐयेतेशतंवरुणयेसहस्रंयज्ञियाःपाशाविततामहान्तःतेभिर्नोअद्यसवितोतविष्णुर्विश्वेमुंचंतुमरु
तःस्वर्काःस्वाहा इदंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यः ॐउदुत्तमंवरुणपाशमस्मदवाधमं
विमध्यमꣳश्रथाय अथावयमादित्यव्रतेतवानागसोअदितयेस्यामस्वाहा इदंवरुणाय ॐप्रजापतयेस्वाहा इदंप्र
जापतयेइतिमनसा एवंहुत्वासंस्रवप्राशनमाचमनंचकृत्वा पवित्राभ्यांशिरःप्रभृतिसंमार्जनं ॐसुमित्रियानआपओष
धयःसंत्वितिमंत्रेण ॐदुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मइतिमंत्रेणप्रणीतोदकमैशान्यांनिनयेत् त
तःफलपुष्पान्वितघृतेन ॐमूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निंकविंसम्राजमतिथिंजनानामास
न्नापात्रंजनयंतदेवाःस्वाहा इदमग्नये इतियजमानसहितोहोता पूर्णाहुतिं कुर्यात् ततःस्तरणक्रमेणबर्हिरुत्थाप्य
आज्येनाभिघार्य ॐदेवागातुविदोगातुंवित्वागातुमितमनसस्पतइमंदेवयज्ञꣳस्वाहावातेधाःस्वाहा इदमग्नये इ
तिबर्हिर्होमंकुर्यात् ततोयजमानःकुशत्रयतिलजलान्यादाय ॐअद्यकृतैतद्धोमकर्मणिकृताकृतावेक्षणरूपब्रह्म
कर्मप्रतिष्ठार्थमिदंपूर्णपात्रंप्रजापतिदैवतंअमुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणांतुभ्यमहंसंप्रददे इतिब्रह्म
णेदक्षिणांदद्यात् स्वस्तीतिप्रतिवचनं यजमानेनतत्परितोषार्थंकिंचिद्दातव्यं ततोवस्त्रयुगसुवर्णकांस्यान्युपनीयकु।

१ सव्वा नि म का द्द द्दि ला पा र्श्वे च क्रे ण प श्चि म पा द वा म पा... मूले न त्र ...

दी श्रं. शॅानादाय ॐ अद्य कर्तव्यवृषोत्सर्गांगभूतकृते तद्धोमकर्मप्रतिष्ठार्थमेतानि वस्त्रयुगस्वर्णकांस्यानि बृहस्पतिवह्निचंद्र

ली. दैवतानि अमुकगोत्रायामुकशर्मणे ब्राह्मणाय होत्रे दक्षिणां तुभ्यमहं संप्रददे इति होत्रे दक्षिणां दद्यात् ततो रुद्राध्यायं

१३ त जपित्वा कर्मकारमाहूय वृषभं कययेत् ततो वत्सरी चतुष्टयसहितं वृषभं कुशजलेन स्नपयेत् तत्र क[illegible]मंत्राः ॐ हिरण्य

वर्णाः शुचयः पावका यासु जातः कश्यपो यास्विंद्रः या अग्निं गर्भं दधिरे सुवर्णास्तान आपः शंस्योना भवंतु ॐ यासां राजा

वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानां या अग्निं गर्भं दधिरे सुवर्णास्तान आपः शंस्योना भवंतु ॐ यासां देवा

दिवि कृण्वंति भक्षं या अंतरिक्षे बहुधा भवंति या अग्निं गर्भं दधिरे सुवर्णास्तान आपः शंस्योना भवंतु ॐ शिवेन मा चक्षुषा

पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे घृतश्चुतः शुचयो याः पावकास्तान आपः शंस्योना भवंतु ॐ शन्नो देवीरभिष्ट-

वं यआपो भवंतु पीतये शंयोरभिस्रवंतु नः इति ततो लोहघंटिकानूपुरकनकपट्टिकादिभिः पंचाप्यलंकृत्य सावित्रीमघ-

मर्षणं रुद्रान् पुरुषसूक्तं यद्देवा देवहेडनमित्यादिसूक्तत्रयं कूष्मांडीश्च जपेत् ततो वृषभस्य दक्षिणकर्णे ॐ पिता वत्सानां

पतिरघ्न्यानामथो पिता महतां गर्गराणां वत्सो जरायु प्रतिधुक् पीयूष आमिक्षा घृतं तद्धस्य रेतः ॐ वृषो हि भगवान् धर्म-

श्चतुष्पादः प्रकीर्तितः वृणोमि तमहं भक्त्या स मां रक्षतु सर्वतः इति मंत्रद्वयं पठित्वा कुशत्रयतिलजलान्यादाय ॐ अद्याशौ-

चांतद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य मोक्षकामो रुद्रदैवतं वृषभमेनं पतिं वो ददानि तेन क्रीडंतीश्चरथ प्रिये-

ण मानः साप्तजनुषा सुभगा रायस्पोषेण समिषा मदेम तु उत्सृजेत् लोहितो यस्तु वर्णेन पुच्छाग्रेण च पांडुरः श्वेतः खुरविषाणा-

भ्यां स नीलो वृष उच्यते नीलवृषे नीलपद प्रक्षेपः कार्त्तिक्यां

वृषोत्सर्गनिमित्तकमाभ्युदयिकं कृत्वा ॐअद्य कार्त्तिक्यां वृषमुत्सृज्यमानो हमिमान् पूपान् विश्वेदेवता न अमुकगोत्राया
अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इत्यपूपत्रयं ब्राह्मणाय दद्यात् दक्षिणां च दद्यात् ॐ कार्त्तिक्याम पूपान्दत्त्वाऽमुकगो
त्रस्य पितुरमुकप्रेतस्य मोक्षकामो रुद्रदेवतं वृषभमेनं युवानं पतिं वो ददानि तेन क्रीडंतीश्चरथ प्रियेण मानः साप्ता प्रजनु
षासुभगा रायस्पोषेण समिषा मदेमेति वाक्यं कर्त्तव्यं एतयैर्वोत्सृजेरन्निति पारस्करवचनात् अनयैव सह वाऽउत्सर्गः
अस्यार्थस्तु हे वत्सतर्यो वो युष्माकमेनं पतिं स्वामिनं युवानं तरुणं ददानि त्यजानि तेनैतेन वृषेण प्रियेण सह क्रीडंतीः
रवेलंत्यश्चरथ भ्रमथ यूयमपि हे वत्सतर्यो मा नः नोऽस्माकं नना स्म त्वच्चत्वविषयः किंतु मया त्यक्ताः वयं वृषस्य भवंतीनां च
त्यागेन रायस्पोषेण धनसमृद्ध्या साप्ता प्रजनुषा सप्तजन्मव्यापकेन इषा अन्नेन च सं मदेम हृष्णा भवेम सुभगा लोकस्य
प्रिया इति ततऐशानीं दिशं पंचापि चालयेत् पूजयेत् एषोऽर्घः ॐसोपकरणा वत्सतरीचतुष्टयसहित वृषभाय नमः इदम
नुलेपनं ॐसोपकरणा वत्सतरीचतुष्टयसहित वृषाय नमः इति पुष्पैः एतानि धूपदीपतांबूलनैवेद्यानि ॐसोपकरणाव
त्सतरीचतुष्टयसहित वृषाय नमः ततो वत्सतरीचतुष्टयमध्यगतं वृषमभिमंत्रयेत् तत्र मंत्रः ॐमयो भूरभि मावाहि स्वा
हा मरुतोऽसि मरुतां गणः शं भूर्मयो भूरग्निमावहि स्वाहा वस्यूरसि ऊर्वस्वान्तभूर्मयो भूरभि मावहि स्वाहा यास्ते अग्ने सू
र्ये रुचो दिवमातन्वंति रश्मिभिः ताभिर्नो अद्य सर्वाभी रुचे जनाय नमस्कृधि या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः
इंद्राग्नी ताभिः सर्वाभी रुचन्नो धत्त बृहस्पतेः रुचन्नो धेहि ब्राह्मणेषु रुचन्नो राजसु नमस्कृधि रुचं विश्येषु शूद्रेषु म
यि धेहि रुचा रुचं तत्त्वा यामि ब्रह्मणा वंदमानस्तदा शास्ते यजमानो हविर्भिः अहेडमानो वरुणेह बोध्युरुशंस मानः प्रयुः

त त

अधि: जले स्व हस्ते दानं ... पाणौ ... दानं पाद्यं    स्वर्णार    स्वाहा    स्वाहा

श्रा॰ प्री॰ १४ 14

प्रमोदी: स्वर्णा धर्म्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्णाशुक्रः स्वाहा स्वर्णज्योतिः स्वर्णासूर्य्यः ततः कृतापसव्यो दक्षिणामुखो वाम
जानुं पातयित्वा यवतिलकुशपुष्पमोटकादीन्यादाय ताम्रपात्रादिना मंत्रस्य फलमुष्टिभ्यां जलित्रयेण तर्पयेदनेन मंत्रेण
ॐ स्वधापितृभ्यो मातृभ्यो बंधुभ्यश्चापितृप्तये मातृपक्षाश्रये के चिद्ये चान्ये श्राद्धपितृपक्षजाः गुरुश्वशुरबंधूनां ये कु
लेषु समुद्भवाः ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः वृषोत्सर्गेन ते सर्वे लभंतां प्रीतिमुत्तमां इति ततः कर्मकारमाहू
याभिमतं वेतनं तस्मै दद्यात् उत्सृष्टान्ब्राह्मणान्श्रावयेत् यत्किंचिद्धिमयोत्सृष्टं तदन्यो न नयेत् अथ कपिलादानं ॐ सौप
करणाये सवत्सकपिलगव्ये नमः ॐ ब्राह्मणाय नमः इति देयब्राह्मणो त्रिः संपूज्य ॐ इमां सोपकरणां सवत्सां कपिलां द
दानीति द्विजकरे जलदानं जले न देयद्रव्याभिषेचनं कुशादीन्यादाय ॐ अद्याशौचांतद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुक
प्रेतस्य स्वर्गप्राप्तिकाम इमां कपिलां गां हेमशृंगीं रौप्यखुरां वस्त्रयुगछन्नां कांस्योपदोहां मुक्तालांगूलविभूषितां सवत्सां
रुद्रदेवताममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात् ॐ स्वस्तीति प्रतिवचनं ततो दक्षिणाद्रव्यादि
कमादाय ॐ अद्यकृतैतत्सोपकरणसवत्सकपिलगवीदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रायामुकशर्म
णे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इति दद्यात् ततः प्रतिगृहीता ॐ स्वस्तीति उक्त्वा गोपुच्छग्रहणं यथाशास्त्रं कामस्तु
तिं च कुर्य्यात् ततः ॐ को दात् कस्मा अदात् कामोदात् कामायादात् कामो दाता कामः प्रतिगृहीता कामैतत्त इति यजुर्वे
दे ॐ क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिगृहीता कामः समुद्रमाविशात् कामेन त्वा प्रतिगृह्णामि
कामैतत्ते इति सामवेदे कामस्तुतिः यथोक्तकपिलालाभे केवलामपि दद्यात् तत्र पूजादि पूर्ववत् ॐ अद्याशौचांतद्वितीयेऽह्नि

अमुकगोत्रस्यपितुरमुकप्रेतस्यस्वर्गप्राप्तिकामइमांकपिलांगांरुद्रदैवतांअमुकगोत्रायामुकशर्म्मणेब्राह्मणायतुभ्यम
हंसंप्रददे इतिदद्यात् ॐस्वस्तीतिप्रतिवचनं ततोदक्षिणाद्रव्यादिकमादाय ॐअद्यकृतैतत्कपिलगवीदानप्रतिष्ठार्थमिदं
हिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणांतुभ्यमहंसंप्रददे इतिदक्षिणांदद्यात् ॐस्वस्तीतिप्रति
वचनं गोपुच्छग्रहणंकामस्तुतिश्चपूर्ववत् ततोमहानद्यादौसचैलंस्नात्वातीर्थानिमनसाध्यात्वातज्जलेनात्मानमभ्युक्ष्य
उत्तरेत् अथैकादशाहश्राद्धप्रयोगः सचसुगतिसोपानानुसारेणलिख्यते तत्रपूर्वेद्युरात्रौनिमंत्रणासंभवेतस्मिन्नेवाह्नि
श्राद्धवेलायांमंडलाद्बहिः शुचिराचांतः शुक्लद्विवासागोमयोपलिप्तायांभूमौअपसव्यवत् कृतगोमूत्रमंडलायांभूमौ
पाद्बहिः ॐभूम्यैनमः इतित्रिः पुष्पाक्षतपूजितायांदर्भेषुतिष्ठन् पात्रब्राह्मणंयजमानसवर्णेनाहूतंस्नातमाचांतंस्वागतं
अपिपृच्छेत् ॐसुस्वागतमितितेनोक्ते उभावप्युपविशतः ततःश्राद्धकर्त्ता ॐइदंतेपाद्यमितिपाद्यमुपनीयविनीतःसन्प्र
नः पुनरभिनंद्य पात्रब्राह्मणपादौप्रक्षाल्यापसव्यादिकृत्वा जलतिलगंधपुष्पयुतं अर्घपात्रमादायमोटकतिलजलानि
चादाय ॐअद्यामुकगोत्रपितरमुकप्रेतआद्यश्राद्धे एषपादार्घस्तेमयादीयतेतवोपतिष्ठतामितिपादार्घंदद्यात् शिरसा
भिवंद्यजानुनिविश्य ॐइदंतेआचमनीयमित्याचमनीयोदकंब्राह्मणायदद्यात् ततःस्वयंपादौप्रक्षाल्याचम्यापसव्या
दिकृत्वापुष्पचंदनतांबूलानिब्राह्मणायदत्वाब्राह्मणदक्षिणजानुस्पृष्ट्वा ॐअद्यामुकगोत्रस्यपितुरमुकप्रेतस्याद्यश्रा
द्धकरणायभवंतंब्राह्मणमहमामंत्रये ॐआमंत्रितोस्मीतिप्रतिवचनं ॐअक्रोधनेनशौचपरेणसततंब्रह्मवादिना भ
वितव्यंभवताचमयाचश्राद्धकारिणा ॐसर्वायासविनिर्मुक्तेनकामक्रोधविवर्जितेनभवितव्यंभवतानोद्यतनेश्राद्धकर्म

श्रा॰ दी॰
१५

णीति ब्राह्मणान् नियमान् श्रावयेत् ॐ भवितव्यमिति तेनेक्ते अर्घपरिकल्प्यमोटकादिकं चादाय ॐ अद्यामुकगोत्र पितरमु
क प्रेत आद्यश्राद्धे एष पादार्घस्ते मयादीयते तवोपतिष्ठतामिति पादार्घं दद्यात् ततः शिरसाभिवन्द्य जानुनि विश्राम्य
ॐ इदं ते आचमनीयमित्याचमनजलं ब्राह्मणाय दद्यात् ततस्तिलतैलेन पात्रब्राह्मणपादावाजानु अभ्यंजयेत् ततः
स्वयं पादौ प्रक्षाल्याचम्य पात्रब्राह्मणमाचम्याग्रे कृत्वा स्वदेशमागत्योपविश्यान्न्नां भिन्नो सासिद्धमिति पृच्छेत् दक्षि
णाग्रैककुशसहितनैपालकंवलाद्यात्मकं ब्राह्मणोपवेशनायासनमुपकल्प्यासनं स्पृशन् ॐ अत्रासने देवराजा॰
भ्यनुज्ञातो विश्रम्यतां द्विजवर्य्यानुग्रहात् प्रसादयेत्वासनं गृहन्स्व तज्ज्ञानाग्निपूतेन करेण विप्र इति पठित्वा पात्रब्रा
ह्मणं दक्षिणहस्तेन धृत्वोदङ्मुखमुपवेशयेत् ततः पात्रस्य पदयोस्तले दक्षिणाग्रकुशत्रयं दद्यात् आसनसमीपे च
तिलतैलेन घृतेन वा श्राद्धसमाप्तिपर्य्यंतं स्थायिनं दीपं दद्यात् तद्दक्षाच पात्रब्राह्मणेन कार्य्या रक्षोघ्नान् गौरस
र्षपान् तिलांश्च श्राद्धदेशसं निधापयेत् काककुक्कुरादीन् श्राद्धहंतृन् पसारयेत् ततः पूर्वाभिमुखः कुशोदकेन ॐ
अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा यः स्मरेत् पुंडरीकाक्षं स बाह्याभ्यंतरः शुचिः इति पठित्वा ॐ पुंडरीकाक्षः पुना
त्विति पुंडरीकाक्षं स्मृत्वा श्राद्धीयद्रव्याण्यात्मानं च सिंचेत् ततः कुशत्रयतिलजलान्यादाय ॐ अमुकगोत्रस्य पितुरमु
क प्रेतस्य प्रेतत्वविमुक्तिकामोऽद्यादि यथाकालं षोडश श्राद्धान्यहं करिष्य इति संकल्पयेत् एकादशमासाभ्यंतरे ऽ
धिकमासपाते षोडशपदस्थाने सप्तदशपदं प्रयोज्यं पुनः कुशतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुक प्रेतस्य

प्रेतत्वविमुक्तिहेतुं षोडशश्राद्धांतर्गताद्यश्राद्धमहं करिष्ये इति संकल्पयेत् ॐ कुरुष्वेति ब्राह्मणप्रतिवचनं ॐ गायत्रीं जप
महं करिष्ये इति पृष्ट्वा ॐ कुरुष्वेति ब्राह्मणानुज्ञातस्त्रिर्गायत्रीं जपेत् सव्याहृतिकां सप्रणवां च जपनीया गायत्री ततः
ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव नमो नमः इति त्रिर्जपेत् ततोपसव्यं कृत्वा
दक्षिणाभिमुखः पातितवामजानुर्मोटकादीन्यादाय ॐ अद्यामुकगोत्रपितरमुकप्रेत आद्यश्राद्धे इदमासनं ते मया
दीयते तवोपतिष्ठतामिति मोटकरूपमासनं तिलजलप्रोक्षितं दक्षिणाग्रमुत्सृजेत् ततः सव्यं कृत्वा प्राङ्मुख उपविश्य ॐ
छत्राय नमः ॐ ब्राह्मणाय नमः इति देयब्राह्मणौ त्रिः संपूज्य इदं छत्रं ते ददानि इति द्विजकरे जलं दत्वा छत्रमभिषिच्य
कुशतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्यावरणकामः इदं छत्रमुक्तानां गिरो देवतममुकगोत्राया
मुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात् ॐ स्वस्तीति प्रतिवचनं ततः तिलजलकुशान्दक्षिणाद्रव्यं चादाय
ॐ अद्यकृतैतच्छत्रदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति
दक्षिणां दद्यात् ततः प्रतिगृहीता ॐ स्वस्तीत्युक्त्वा छत्रं दंडेन धारयेत् ततः ॐ उपानद्भ्यां नमः ॐ ब्राह्मणाय नमः इति दे
यब्राह्मणौ त्रिः संपूज्य ॐ इमे उपानहौ ददानीति द्विजकरे जलं दानं उपानहावभिषिच्य कुशादीन्यादाय ॐ अद्यामुकगो
त्रस्य पितुरमुकप्रेतस्य तप्तवालुकासिकंटकितभूदुर्गसंतरणकामः इमे उपानहावुक्तानां गिरो देवते अमुकगोत्रायामुक
शर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात् ॐ स्वस्तीति प्रतिवचनं ततः कुशादीन्दक्षिणाद्रव्यं चादाय ॐ अद्यकृतैतदु
पानद्दान प्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात् ततः प्रतिगृ

हीता ॐ स्वस्तीत्युक्त्वा उपानहावारोहेत् ततः अपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुः ॐ अपहता असुरा रक्षांसि
वेदिषद इति वामावर्तेन श्राद्धदेशे तिलान्विकीर्य्य सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः अस्मिन्यज्ञे स्वधया मदंतोऽधिब्रु
वंतु तेऽवंत्वस्मान् इति जपेत् ततोऽर्घपात्रोपरि अनग्रछिन्नं दक्षिणाग्रं पवित्रं धृत्वा ॐ शन्नो देवीरभिष्टय आपो भवंतु पीत
ये शंय्योरभिस्रवंतु नः इति मंत्रेणार्घपात्रे जलं दत्त्वा ॐ तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः प्रत्नमद्भिः पृक्तः स्वध
या पितॄन् लोकान्प्रीणाहि नः स्वाहेति तिलान्प्रक्षिप्य गंधपुष्पं तूष्णीं तत्र प्रक्षिप्यार्घपात्रं वामहस्ते कृत्वा पवित्रं विप्रकरे
उत्तराग्रं दत्त्वा तदुपरि किंचिदुदकं तरं दत्त्वा ॐ या दिव्या आपः पयसा संबभूवुर्या अंतरिक्षा उत पार्थिवीर्याः हिरण्यवर्णा
यज्ञियास्तान आपः शिवाः स शं स्योना सुहवा भवंतु इति पठित्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत अ
र्घ श्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति ब्राह्मणकरे पवित्रोपरि अर्घजलं ददत् उत्सृजेत् पात्रं वामपार्श्वे
ॐ पितृभ्यः स्थानमसीति अर्घपात्रं सपवित्रमधोमुखं स्थापयेत् तच्च दक्षिणादानपर्य्यंतं न चालयेत् ततः श्राद्धदेशे तिलान्
विकीर्य्य दर्भहस्तो भूतले प्रेतमाह्वयेत् तत्र मंत्रः इह लोके परित्यज्य गतोसि परमां गतिमिति अत्र स्त्रीश्राद्धे पि गतासीत्ये
वमेव पठनीयमात्मत्वेनोद्देश्यत्वात् ततो मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे एतानि गंधपु
ष्पधूपदीपतांबूलयज्ञोपवीतवासांसि ते मया दीयंते तवोपतिष्ठतामिति गंधादीनुत्सृजेत् ततः ॐ सर्वे सुगंधः इति मंत्रे
ण गंधं ॐ श्रिया देव्या इति मंत्रेण पुष्पं ॐ वनस्पतिरसामिति मंत्रेण धूपं ब्राह्मणाय निवेदयेत् ततः ॐ एष दीपः इति दीपं निवेदि
ते ॐ सुदीप इति ब्राह्मणो वदेत् ॐ एतानि तांबूलानि इति तांबूले निवेदिते ॐ सुतांबूलानीति ब्राह्मणो वदेत् ॐ एतानि वासांसि

वा०

सीतिनिवेदिते ॐसुवासांसीतिब्राह्मणोवदेत् पुष्पाणि शिखायामेवद्विजेनधार्य्याणि ततः प्रेतोपभुक्तशय्यासनानिगंधः
पुष्पैरभ्यर्च्यश्राद्धभोक्त्रे प्रतिपादयेत् ततोगोमयमृत्तिकयानीवारादिचूर्णेनजलेनब्राह्मणंवेष्टयित्वाचतुरस्रंमंडलंकुर्या
त् परकीयभूमौश्राद्धकरणेश्राद्धीयवस्तुषु किंचित्किंचिदुद्धृत्यतिलजलघृतयुक्तमन्नं ॐइदमन्नमेतद्भूमिस्वामि
पितृभ्योनमः इतिदद्यात् जीवितोभूस्वामिनो किंचिदाप्रीतिकरंदद्यात् ततउष्णमन्नंताम्रपात्रेणकराभ्यामादायमना
कुस्थित्वापितरंध्यात्वापुरुषतृप्तिहेतुमंपरिविष्यात् ततइदंमधुरमिदमत्युष्णमिदमन्नमित्यादिव्यंजनगुणान्कीर्त्तय
न्मांसादीनिव्यंजनानिभूयिष्टपात्रांतरेषुपरिविष्य घृतंसतिलजलंचोपनीयान्नंमधुनाभिघारयेत् ततः ॐमधुवा
तास्तायतेमधुक्षरंतिसिंधवः माध्वीर्नः संत्वोषधीः मधुनक्तमुतोषसोमधुमत्पार्थिवं रजः मधुद्यौरस्तुनः पितामधु
मान्नोवनस्पतिर्मधुमांअस्तुसूर्यः माध्वीर्गावोभवंतुनः मधुमधुमधु इतिचपठित्वा व्यस्तमुत्तानपाणिभ्यामन्नपात्र
मालभ्य ॐपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽमृतेऽमृतंजुहोमिस्वाहा इतिजपेत् ॐविष्णुर्विचक्रमेत्रेधानि
दधेपदंसमूढमस्यपांसुरे इतिपठन्नमृतयान्नंविचिंत्य ॐकृष्णकव्यमिदंरक्षस्वमदीयमितिपठित्वा ॐइदमन्नं ॐ
इमाआपः ॐइदमाज्यं ॐइदंहविरिति पात्रब्राह्मणांगुष्टमन्नजलघृतान्नेषुनिवेश्य ॐअपहताअसुरारक्षांसिवेदिष
दइत्यन्नोपरिवहून्तिलानिविक्षिप्यमोटकादीन्यादाय वामेनपाणिनापात्रमत्यजन् ॐअद्यामुकगोत्रपितरमुकप्रेत
आद्यश्राद्धइदमन्नंसोपकरणंतेमयादीयतेतवोपतिष्ठतामित्युत्सृजेत् ततोभवान्प्राशयत्विति विप्रायापोशानदत्वासप्र
णवांसव्याहृतिकांगायत्रीं ॐमधुवाताइत्यादिस्वं च ॐमधुमधुमधिवितिचजपित्वा ॐअन्नहीनंक्रियाहीनंविधिहीनंचय

इदं

33

स्रवेत् तत्सर्वमछिद्रमस्त्विति च पठित्वा ॐ यथासुखं जुषध्वेति ब्राह्मणं प्रतिब्रूयात् ब्राह्मणश्च वामेन पाणिना पात्रमत्यजन् ॐ
कारपूर्वं भुंजीत संज्ञया विभज्य प्रार्थनं न कुर्यात् श्राद्धकर्त्ता दर्भेष्वासीनः सप्रणवव्याहृतिकां गायत्रीं मधुवाता इत्यादि त्र्यचं
ॐ मधु मधु मधु इति जपेत् गायत्रीं ब्राह्मणं श्रावयित्वा ॐ कृणुष्व पाज इत्यादीन् रक्षोघ्नान् मंत्रान् पठित्वा भूमिं तिलैरास्ती
र्य ब्राह्मणं पितृरूपतया ध्यायेत् ततः ॐ उदीरतामित्यादि पितृमंत्रान् ॐ सहस्रशीर्षा इत्यादि पुरुषसूक्तं ॐ आशुः शि
शानो इत्यादिकमप्रतिरथं मन्यादीनि शतरुद्रियप्रभृति पवित्राणि रुचिस्तव प्रभृतीनि च पठेत् ॐ ततः नमस्तुभ्यं विरूपा
क्ष नमस्ते नेकचक्षुषे नमः पिनाकहस्ताय वज्रहस्ताय वै नमः इति श्लोकमपि पठेत् वीणादिभिर्ब्राह्मणं हर्षयन् व्यंज
नादिगुणान् कीर्त्तयन् तस्य यत्र यत्रेच्छोपलभ्येत तत्तदुपनयन् मंदं मंदं भोजयेत् ततस्तत्तृप्तं ज्ञात्वा उच्छिष्टसन्निधावा
स्तृतदक्षिणाग्रकुशास्त्रयां भूमिं प्रोक्ष्य सर्वप्रकारकमन्नं तिलघृतसहितं जलेनाप्लाव्य गृहीत्वा ॐ अग्निदग्धाश्च ये
जीवा ये प्यदग्धाः कुले मम भूमौ दत्तेन तृप्यंतु तृप्ता यांतु परां गतिमिति मंत्रेण मंत्रस्य फलमुद्दिश्य कुशोपरि तदन्नं विकि
रेत् ततः सव्यं कृत्वाचम्य हरिं स्मृत्वा पसव्यं कृत्वा दक्षिणाभिमुखो ब्राह्मणाय जलगंडूषमिदं ते प्रत्यपोशानमिति दत्वा
ॐ स्वदितमिति ब्राह्मणं पृच्छेत् ॐ सुस्वदितमिति तेनोक्ते ॐ पिंडमहं करिष्य इति पृच्छेत् कुरुष्वेति ब्राह्मणानुज्ञात उच्छिष्ट
संनिधौ चतुरस्रं हस्तैकप्रमाणं दक्षिणाप्लवं चतुरंगुलोच्छ्रितं स्थानं निर्माय तन्मध्ये वामहस्तेन दर्भपिंजलीमादाय तन्
मूलेन वामान्वारब्धदक्षिणकरेण प्रादेशमात्रं ॐ अपहता असुरा रक्षांसि वेदिषद इति मंत्रेण रेखामुल्लिखेत् दर्भपिंज
लीमुत्तरस्यां दिशि क्षिपेत् तदुपरि ॐ ये रूपाणि प्रतिमुंचमाना असुराः संतः स्वधया चरंति परापुरो निपुरो ये भरंत्यग्नि

ष्टांल्लोकान्प्रणुदात्यस्मादिति उल्मुकं भ्रामयित्वा रेखा दक्षिणतः क्षिपेत् तदुपरि उपमूलसकृल्लूनकुशान्दक्षिणा
ग्रानास्तीर्य्य सव्यं कृत्वा ॐ देवताभ्य इति त्रिर्जपेत् ततोऽपसव्यं कृत्वा पत्रपुटकादिकमेकं तिलजलगंधपुष्पयुतं वामहस्ते कृ
त्वा दक्षिणहस्तेन मोटकादिकमादाय ॐ अद्यामुकगोत्र पितरमुक प्रेत आद्यश्राद्धपिंडस्थानेऽत्रावनेनिक्ष्व ते मया दीयते
तवोपतिष्ठतामिति कुशोपरि अवनेजनं दद्यात् ततः श्राद्धशेषमन्नं सर्वव्यंजनतिलघृतमधुयुतमेकीकृत्य तेन बिल्वप
रिमाणं पिंडं निर्माय घृतमध्वभिघारितं कृत्वा दक्षिणहस्तेनादाय मोटकादीनि चादाय ॐ अद्यामुकगोत्र पितरमुक प्रे
त आद्यश्राद्धे एष पिंडस्ते मया दीयते तवोपतिष्ठतामिति कुशोपरि अवनेजनस्थाने सव्योपगृहीत दक्षिणकरेण पिंडं द
द्यात् आस्तृतदर्भमूले करं प्रोंछ्य सव्यं कृत्वाचम्य हरिं स्मृत्वापसव्यं कृत्वा ॐ अत्र पितर्मादयस्व यथाभागमावृषायस्व
इति पठित्वा वामावर्त्तेनोदङ्मुखो भूत्वामनाकृश्वासं नियम्य तेनैव यथासुखं पर्य्यावर्त्तयन् पितरं भास्वरमूर्त्तिं ध्यायन् ॐ अ
मीमदंत पिता यथाभागमावृषायिष्टेति पठेत् अवनेजनावशिष्टजलयुतं पात्रं वामहस्ते कृत्वा दक्षिणहस्तेन ॐ अद्यामुकगो
त्र पितरमुक प्रेत आद्यश्राद्धपिंडेऽत्र प्रत्यवनेनिक्ष्व ते मया दीयते तवोपतिष्ठतामिति पिंडोपरि प्रत्यवनेजनं दद्यात् ततो नीवीवि
स्रंस्य सव्यं कृत्वाचम्य हरिं स्मृत्वापसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणहस्तेन गृहीत्वा ॐ एतत्ते पितर्वासः इति पिं
डोपरि धृत्वा मोटकादिकमादाय ॐ अद्यामुकगोत्र पितरमुक प्रेत आद्यश्राद्धपिंडे एतद्वासस्ते मया दीयते तवोपतिष्ठतामि
त्युत्सृजेत् ततस्तत्समीपिंडे गंधपुष्पधूपदीपतांबूलानि दद्यात् ततः पिंडशेषान्नं पिंडसमीपे विकिरेत् ततः आचांतस्य ब्राह्मणस्य
करे ॐ अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितं ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवंतु मे इति जलं दद्यात् ॐ भवंतु ते इ

श्रा·
श्री·
१८

तिब्राह्मणस्यप्रतिवचनं ततः ॐलक्ष्मीर्वसतिपुष्पेषु लक्ष्मीर्वसतिपुष्करे लक्ष्मीर्वसतिगोष्ठेषु सौमनस्यंसदास्तुमे इतिपुष्पा
णिदद्यात् ॐअस्तुसदातवेतिप्रतिवचनं ॐअक्षतंचास्तुमे पुण्यंशान्तिःपुष्टिर्धृतिश्चमे यद्यच्छ्रेयस्करंलोके तत्तदस्तुसदाम
मेतितंडुलान्दद्यात् ॐअस्तुसदातवेतिप्रतिवचनं अथवा ॐशिवाआपःसंत्वितिजलं ॐसौमनस्यमस्तु इतिपुष्पं ॐअक्षतं
चारिष्टमस्त्वितितंडुलान्दद्यात् ॐसंत्विति ॐअस्त्वितिप्रतिवचनं ततःपुटकादिपात्रे शान्त्युदकं परिकल्प्यमेदिनीशिरसा
ऽभिवंद्य इमंमंत्रंपठेत् ॐनमोनमोमेदिनिलोकधात्रि उर्वि महि शैलगिरिधारिणि धरणि नमः धरणिकाश्यपिजगत्प्रति
ष्ठेवसुधेनमोस्तु वैष्णवलोकधात्रि नमोस्तुते सर्वरसप्रतिष्ठे नैवापन्नारीवनमोनमोस्तुते ततोमोटकादिकमादाय ॐअद्या
मुकगोत्रस्यपितुरमुकप्रेतस्याद्यश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठतामितिविप्रकरेऽक्षय्योदकंदद्यात् ॐउपतिष्ठतामि
तिप्रतिवचनं ततः सव्यंकृत्वा प्राङ्मुखः कृताञ्जलिः तन्मनाः सुमनादक्षिणांदिशंपश्यन् ॐअघोरःपितास्त्वितिपठेत् अ
त्रपूर्वाभिमुखोपिंडोपरिजलधारांददानीत्याचारः ॐअस्त्वितिप्रतिवचनं ततः पूर्वाभिमुखः ॐगोत्रंनोवर्द्धतामितिवदेत्
ॐवर्द्धतामितिप्रतिवचनं ॐदातारोनोभिवर्द्धन्तांवेदाःसंततिरेवच श्रद्धाचनोमाव्यगमद्बहुदेयंचनोभवेत् अन्नंचनो
वहुभवेदतिथींश्चलभेमहि याचितारश्चनःसंतु माचयाचिष्मकंचन एताःसत्याशिषःसंत्विति आशिषोब्राह्मणांया
चेत् ॐसंत्वितिब्राह्मणप्रतिवचनं ततोपसव्यंकृत्वा सपवित्रकुशत्रयंपिंडोपरिदक्षिणाग्रंकृत्वा ॐनमोवाचयिष्येइतिपृ
छेत् ॐवाच्यतामित्यनुज्ञातः ॐपित्रेनमः इत्युच्यतामितिवदेत् ॐअस्तुनमः इतिप्रतिवचनं ततःपुटकादिस्थितंजलंगृही
त्वा ॐऊर्जंवहन्तीरमृतंघृतंपयःकीलालंपरिस्रुतं स्वधास्थतर्पयतमेपितरमितिदक्षिणाग्रांजलधारांसपवित्रकुशोपरि

गत्रदृशेन वत्स

दद्यात् ततो नम्रीभूय पिंडमाघ्राय उत्थापयेत् पिंडाधारकुशानुल्मुकं च वह्नौ क्षिपेत् ततोऽर्घपात्रमुत्तानीकृत्य मोदकति
लजलान्यादाय दक्षिणाद्रव्यं चादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कृतैतदाद्यश्राद्धप्रतिष्ठार्थमिदं रजतं चंद्रदैवत

य

ममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इति दक्षिणां दद्यात् ॐ स्वस्तीति ब्राह्मणप्रतिवचनं ततः श्रा॰
द्धकर्ता पात्रं ब्राह्मणस्य चरणौ संवाह्य तं नमस्कुर्यात् ततो दक्षिणेन पाणिना पात्रं ब्राह्मणदक्षिणपाणिं गृहीत्वा शय्यासन
मंजनकं कतिकां चार्पयेत् ब्राह्मणस्त्वंजनकं कतिकां चादाय शय्यामाक्रम्य मुहूर्तं विश्राम्येत् ततः सामवेदाध्यायिब्राह्म

श्रात्रपेपुःपत्र
मात्रेपत्रि

णास्ताम्रपात्रस्थं तिलोदकमुपाहरेयुः ततः श्राद्धकर्ता तेन जलेन गृहस्थितं द्रव्यमभिषिंचेत् ततः सव्यं विधाय ॐ अग्नि
मुखदेवास्तर्पंतामिति यवयुतजलेन कुशैः कुशोपरि तर्पयेत् अवशिष्टमन्नं ॐ भूतेभ्य एष बलिर्नम इति जलपुष्पाभ्यां ब
लिं दद्यात् ततः सामगब्राह्मणान् भोजनादिभिः संतोषयेत् ततोपसव्येन ॐ निरोकारं स्वस्ति ब्रूहीति ब्राह्मणाय वदेत् स्व
स्तीति ब्राह्मणो ब्रूयात् स्वस्त्यस्त्विन्युक्त्वा ब्राह्मणमुत्थाप्य जलपात्रं गृहीत्वा निमंत्रणस्थानस्थितं ब्राह्मणं ॐ आ मा वा
जस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे आ मा गंतां पितरो मातरा चा मा सोमो अमृतत्वेन गम्यात् इति पठन् प्रद॰
क्षिणीकुर्वन् वारिधारया त्रिर्वेष्टयित्वा प्रणम्याष्टौ पादाननुव्रज्य प्रदक्षिणीकृत्याभिवादयेत् सव्यं कृत्वा ॐ देवताभ्य
इति जपित्वा गृहं प्रविशेत् ततः पाणिभ्यामपसव्येन श्राद्धीयदीपनिर्वापणं हस्तपदप्रक्षालनं सव्येनाचमनं कुर्यात् ततः
श्राद्धपूर्णताकामः ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः इति पठित्वा वि
ष्णुस्मरणं कुर्यात् ततोऽशौचांतद्वितीयदिन एव यथाशक्ति महार्हाणि रत्नानि गाः वाहनं यानादि दासं दासीमहांति वेश्मानि

नी॰ ८ इदमासनंतेमयानमः ॐ अद्य॰

अशौचानि भूयलाणि प्रेतहितमुद्दिश्य ब्राह्मणाय दद्यात् तद्यथा ॐ अद्याशौचांतद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकाम इमां गां रुद्रदैवतां यथानाम गोत्राय ब्राह्मणाय दातुमहं समुत्सृजे इति गां दद्यात् ॐ अद्य कृतैतद्गोदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानाम गोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति यथाशक्ति दक्षिणां दद्यात् एवं भूमिहिरण्यदानमपि अस्मिन्दिने दशप्रभृतीन्श्रोत्रियान्भोजयेत् तान्परितोषयेच्च अत्रादिने विहितमपि पंचगव्यपानं शिष्टानाचरंतीति न लिखितं अथोदकुंभदानं तत एकादशाहश्राद्धं कृत्वा चमप्राङ्मुखउपविश्य कुशतिलजलान्यादाय ॐ पितृगताहरहरन्नोदकुंभोपस्थितिस्वर्गताश्वमेधयज्ञजन्यफलप्राप्तिकामोऽद्यादिपितृमरणादिनावधिकाशौचावच्छिन्नदिनोनवत्सरं यावत्प्रत्यहं पित्रे सान्नोदकुंभस्ते मयादीयते तवोपतिष्ठतामित्युत्सृजेत् तद्भयं पात्रब्राह्मणाय प्रतिपादयेत् दक्षिणां अशौचोपनिपाते प्ययं दातव्य इति सपिंडने कृते वर्षाभ्यंतरे ॐ अद्यामुकगोत्रपितरमुकशर्मन्नेयं सान्नोदकुंभस्तुभ्यं स्वधेति वाक्यं कुर्यात् ततो मोटकादीन्यादाय ॐ अद्य कृतैतत्सान्नोदकुंभदानप्रतिष्ठार्थमिदं रजतं चंद्रदैवतं यथानाम गोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति प्रत्यहं सान्नोदकुंभं दत्वा दक्षिणां दद्यात् अत्र द्वादशाहश्राद्धं कार्यमिति केचित् तदप्येकादशाहवत् अथ मासिकश्राद्धप्रयोगः तत्र श्राद्धपूर्वदिने एकभक्तादिकं विधाय प्रातः श्वेतवस्त्रयुगेन स्नात्वा मध्यंदिने पुनः स्नात्वा कृतनित्यक्रियः आचांत उपविष्टः पूर्वोपकल्पितं प्रज्वालितप्रदीपं स्थापितगौरसर्षपतिलादिरक्षोघ्नं श्राद्धदेशमागत्य ॐ सिद्धिमिति पृष्ट्वा कुशत्रयजलेन ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा यः स्मरेत्पुंडरीकाक्षं स बाह्याभ्यंतरः शुचिः इति पठित्वा ॐ पुंडरीकाक्षः पुनात्विति उच्चार्य श्राद्धदेशं द्रव्याण्यात्मानं च सिंचेत् ॰॰॰॰॰॰

कुंभस्य ... इदमासनं तेमयादीयते तवोपतिष्ठतां ॐ अद्यामुकगोत्रपितरमुकशर्मन् प्रेतायं सान्नोदक

ओं अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्तिहेतुं षोडशश्राद्धांतर्गतप्रथममासिकश्राद्धमहं करिष्ये इति संकल्पं
कुर्यात् एकादशमासाभ्यंतरे ऽधिकमासपाते षोडशपदस्थाने सप्तदशपदं प्रयोज्यं ततस्त्रिः गायत्रीं जपित्वा ओं देवताभ्यः
पितृभ्यश्च महायोगिभ्य एव च नमः स्वाहायै इत्यादि त्रिर्जपेत् ततोपसव्यादि कृत्वा मोटकादीन्यादाय ओं अद्यामुकगोत्र
पितरमुकप्रेत प्रथममासिकश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठतामिति आसनमुत्सृजेत् ततः अपहता इत्यादि वामा
वर्त्तेन श्राद्धदेशे तिलान्विकिरेत् ततः ओं आयंतु नः पितरः इति मंत्रं पठेत् पुटकादौ पवित्रं दक्षिणाग्रं धृत्वा ओं शन्नोदेवी
रिति मंत्रेण तत्र जलं क्षिपेत् ओं तिलोसि इत्यादि मंत्रेण तिलान् क्षिपेत् तूष्णीं गंधपुष्पं च क्षिपेत् ततस्तदर्घपात्रं वामहस्ते कृ
त्वा पवित्रमन्नपात्रोपरि उत्तराग्रं धृत्वा तदुपरि किंचित् कांतरं दत्वा ओं या दिव्या आपः इत्यादि पठित्वा दक्षिणहस्तेन मोट
कादीन्यादाय ओं अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति पवि
त्रोपरि जलं दद्यात् ततः पवित्रादिसहितमर्घपात्रमासनवामपार्श्वे ओं पितृभ्यः स्थानमसीति न्युब्जं कुर्यात् पुनर्मोटका
दीन्यादाय ओं अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासां
सि ते मया दीयंते तवोपतिष्ठंतामिति गंधादिकमुत्सृजेत् ततः आसनस्य भोजनपात्रसहितस्य चतुर्दिक्षु चतुरस्रं
मंडलं जलेन कृत्वा श्राद्धीयान्नाग्रभागं घृतव्यंजनतिलजलयुतं पुटकादौ कृत्वा ओं इदमन्नमेतद्भूस्वामि पितृ
भ्यो नमः इत्युत्सृजेत् ततस्ताम्रपात्रादिस्थितमन्नं हस्ताभ्यामादाय मनाक् स्थित्वा पितरं ध्यायन् भोजनपात्रे उप

प

श्रा॰ प्र॰ २० ओं

नयत् उक्तं तत्क्षिप्तमन्नं परिविष्य भूमिस्थपात्रांतरेषु व्यंजनान्युपकल्प्य पुटकस्थितं घृतं सतिलजलं चोपनीयान्नोपरि ह
स्तद्वयगृहीतपात्रेण मधु दद्यात् ततः ओं मधुवाता इत्यादि स्रचं ओं मधु मधु मध्विति च जपेत् ततो व्यत्यस्तहस्ताभ्यामन्नपात्र
मालभ्य ओं पृथिवी ते पात्रं इत्यादि ओं विष्णुर्विचक्रमे ओं कृष्ण कव्यमित्यादि पठित्वा वामेन पाणिनाऽन्नपात्रमत्यजन् दक्षिणह
स्तांगुष्ठमन्नजलघृतान्नेषु ओं इदमन्नं इमा आपः ओं इदमाज्यं ओं इदं हविरिति निक्षिप्य ओं अपहता असुरा इत्यन्नोपरि तिला
न्विकीर्य्य दक्षिणहस्ते मोटकादीन्यादाय ओं अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे इदमन्नं सोपकरणं ते मया
दीयते तवोपतिष्ठतामित्युत्सृजेत् ततो गायत्रीं मधुवाता इत्यादि स्रचं मधु मधु मध्विति च जपेत् अन्नहीनमित्यादि मंत्रं पठेत् ततः
कुशोपविष्टः पुनर्गायत्री ओं मधुवाता ओं मधु मधु मध्विति जपेत् रक्षोघ्नमंत्रान् कृणुष्व पाज इत्यादिकान् जपेत् भूमौ तिला
न् क्षिप्त्वा पित्र्यमंत्र पुरुषसूक्ताप्रतिरथादीनि पवित्राणि यथाशक्ति जपेत् ततः ओं नमस्तुभ्यं विरूपाक्षेति श्लोकमपि पठेत् ततः
उच्छिष्टसंनिधावास्तृतकुशत्रयां भूमिं प्रोक्ष्य व्यंजनघृततिलयुतमन्नं वारिणा प्लाव्य ओं अग्निदग्धाश्चेत्यादिना कुशोप
रि तदन्नं विकिरेत् ततः सव्यं कृत्वाचम्य हरिं स्मृत्वा पिंडस्थानं निर्माय तन्मध्ये वामहस्तोपात्तदक्षिणहस्तगृहीतदर्भपिंज
लीमूलेन प्रादेशमात्रं अपहता इत्यादिनोल्लिख्य दर्भपिंजलीमुत्तरतस्त्यजेत् ततो रेखोपरि ये रूपाणीति मंत्रेणांगारं भ्रामयित्वा
अंगारं दक्षिणतः क्षिपेत् ततो रेखोपरि उपमूलसकृल्लूनकुशत्रयं दक्षिणाग्रमास्तीर्य्य सव्यं कृत्वा पुटके जलतिलपुष्प-
गंधानि कृत्वा मोटकादीन्यादाय ओं अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धपिंडस्थाने अवनेनिक्ष्व ते मया दी
यते तवोपतिष्ठतामित्यवनेजनं कुशोपरि दद्यात् ततस्तिलघृतमधुयुतेनान्नेन पिंडं कृत्वा घृतमधुभ्यामभिघार्य्य दक्षिणहस्तेन

मासमासे मासिकं कुर्यादिति
श्राद्ध

५

मोटकादीन्निचादाय ॐअद्यामुकगोत्रपितरमुकप्रेतप्रथममासिकश्राद्धे पिंडस्थाने एषपिंडस्ते मयादीयते तवोपतिष्ठतां
मितिवामान्वारब्धदक्षिणहस्तेनावनेजनस्थानेपिंडंदद्यात् ततोदर्भमूलेकरंप्रोंछ्य सव्यंकृत्वादक्षिणाभिमुखः ॐअत्रपितर्मा
दयस्वयथाभागमावृषायस्वेतिपठेत् ततःउत्तराभिमुखीभूय उच्छ्वासंनियम्यपितरंभास्वरमूर्तिंध्यायन्नुदङ्मुखंपर्यावर्तयन् ॐअमीमदं
तपितायथाभागमावृषायिषतेतिपठेत् ततोवनेजनपात्रेदत्वावशिष्टजलयुतंवामहस्तेकृत्वादक्षिणहस्तेनमोटकादीन्यादा
य ॐअद्यामुकगोत्रपितरमुकप्रेतप्रथममासिकश्राद्धपिंडेअत्रप्रत्यवनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामितिप्रत्यवनेजनं
पिंडोपरिदद्यात् ततोनीवीविस्रंस्य सव्यंकृत्वावामेनपाणिनाधृतंसूत्रंदक्षिणेनादाय उभाभ्यांपिंडोपरि ॐएतत्तेपितर्वासइ
तिसूत्रंदत्वा मोटकादीन्यादाय ॐअद्यामुकगोत्रपितरमुकप्रेतप्रथममासिकश्राद्धपिंडे एतद्वासस्ते मयादीयते तवोपति
ष्ठतामितिसूत्रमुत्सृजेत् ततस्तूष्णींगंधपुष्पधूपदीपतांबूलादिदद्यात् ततः पिंडशेषान्नंपिंडसमीपेविकीर्य्य ॐशिवाआपः
संत्वितिजलं ॐसौमनस्यमस्त्वितिपुष्पं ॐअक्षतंचारिष्टमस्त्वितितंडुलान् अन्नपात्रोपरिक्षिपेत् ॐ मोटकादीन्यादाय ॐअ
द्यामुकगोत्रस्यपितुरमुकप्रेतस्यप्रथममासिकश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठतामिति अक्षय्योदकंदद्यात् ततः स
व्यंकृत्वा ॐअघोराःपितरःसंत्विति दक्षिणांदिशंपश्यन् पिंडोपरिपूर्वाग्रांजलधारांदद्यात् ततःपूर्वाभिमुखीभूय ॐगोत्रंनोवर्द्ध
तां दातारोनोभिवर्द्धतां वेदाःसंततिरेवचेत्यादिना आशीःप्रार्थनंकुर्यात् ततोपसव्येनपिंडोपरि सपवित्रान्कुशान्धृत्वापुट
कादिस्थजलेन ॐऊर्जंवहंतीरमृतंघृतंपयः कीलालंपरिस्रुतम् स्वधास्थतर्पयतमेपितरमितिकुशोपरिदक्षिणाग्रंज
लधारांदद्यात् ततःपिंडमाघ्रायोत्थापयेत् पिंडाधारकुशानुल्मुकंचवह्नौक्षिपेत् अर्घपात्रमुत्थाप्यमोटकादीन्यादाय
ॐअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यकृतैतत्प्रथममासिकश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतंयथानामगोत्रायब्राह्

णायदक्षिणांदत्तुमहमुत्सृजे इति दक्षिणां दद्यात् ततः सव्यं ॐ देवताभ्य इति त्रिर्जपेत् ततोपसव्यं कृत्वा पाणिनादीपं निर्वाप्य।
हस्तपादप्रक्षालनं सव्यमाचमनं च कुर्यात् ॐ प्रमादादित्यादि पठित्वा विष्णुं स्मरेत् आच्छीय वस्तूनि पात्र ब्राह्मणाय प्रतिपाद
येत् जले वा क्षिपेत् प्रायेण पात्रिकमेव मासिकश्राद्धं कुर्वतीत्य पात्रिकप्रयोगो लिखितः एवमेव द्वितीयमासिक तृतीयमासि
क चतुर्थमासिक पंचममासिको नषाण्मासिक षष्ठमासिक सप्तमासिकाष्टमासिक नवममासिक दशममासिक एकादश
मासिक ऊनवार्षिक द्वादशमासिक श्राद्धेषु तत्तत्पदप्रक्षेपेन प्रयोग ऊह्यः अधिकमासपाते एकादशमासिकानंतरं द्वादशमा
सिकं ततऊनवार्षिकं तत स्त्रयोदशमासिकश्राद्धमिति क्रमः सपात्रिकश्राद्धकरणे ब्राह्मणनिमंत्रणस्वागतप्रश्नपादार्घद
नाचमनीयदानब्राह्मणोपवेशनप्रश्नप्रतिवचनगंधादिप्रत्येकंनिवेदनापोशानदानप्रत्यपोशानदानस्वदितप्रश्नाक्षय्यो
दकदानादिप्रतिवचनं नमोवाचनब्राह्मणविसर्जनानिविशेषश्राद्धश्राद्धप्रयोगवदूह्य इति अथसपिंडनश्राद्धप्रयोगः त
त्राधुनिकाः प्रेतश्राद्धातिरिक्तश्राद्धचतुष्टयं सपात्रकमेव कुर्वतीति तथैव लिख्यते तत्र पूर्वदिने निरामिषमेकवारं भुक्त्वा
रात्रौ सर्वभुक्त जने गृहे विप्रनिवेशनं गत्वा दक्षिणाप्लवगोमयोपलिप्तायां भूमौ आचांतः उपविष्टप ब्राह्मणाकरे दक्षादक्षिण
करेण ब्राह्मणादक्षिणाजानुं स्पृष्ट्वा ॐ अस्यां रात्रावमुकगोत्रस्य पितुरमुकप्रेतस्य श्वः सपिंडीकरणश्राद्धकरणाय भवं त
ब्राह्मणमहमामंत्रये इत्यामंत्रणं कुर्यात् ॐ आमंत्रितोस्मीति प्रतिवचनं ॐ अक्रोधनेन शौचपरेण सततं ब्रह्मवादिना भवि
तव्यं भवता च मया च श्राद्धकारिणा ॐ सर्वायासविनिर्मुक्तेन कामक्रोधविवर्जितेन भवितव्यं भवता नः श्वस्तने श्राद्धकर्म
णीति ब्राह्मणं नियमान्श्रावयेत् यद्यविघ्नेन रजनी यास्यति तदा सर्वमेतत्करिष्यामीति तत्प्रतिवचनं ततोग्निसदने प्रातः
श्वेतवस्त्रयुगेन स्नात्वा मध्यंदिने पुनः स्नात्वा कृतनित्यक्रियः श्राद्धकर्ता श्राद्धनिषिद्धेतरवेलायां गोमयोपलिप्ता कृतपाक
स्थाने तिलान्विकीर्यपरितश्छागवेयित्वा सपिंड दारानूतनभांडैः स्वयं वा पाकमारभेत् श्राद्धभूमिं च पंचगव्येनोपलिप्यजल

लदंगारैः संशोध्य गोरमृत्तिकया छादयित्वा तिलैः सर्षपैश्च विकिरेत् द्विजं कारितश्मश्रुनखच्छेदनमभिगम्य दंतधावनं च ताम्रपात्रे
तैलोद्वर्तनान्युपनीय स्नानार्थं दत्त्वा जलं तत्र स्नातं यजमानः सवर्णानाहूतमाचांतं मध्याह्ने शुचिराचांतः शुक्लदिवासउपविश्य
गोमयोपलिप्तायां भूमौ वामावर्त्तेन गोमूत्रमंडलायां ॐ भूम्यै नमः इत्यक्षतपुष्पैस्त्रिरर्चयित्वा भूमौ कुशत्रयमास्तीर्य्य तदुपरि
तिष्ठन् ॐ स्वागतमिति स्थितं ब्राह्मणं पृच्छेत् ॐ सुस्वागतमिति तेनोक्ते ॐ इदं ते पाद्यमिति पाद्यमुपनीय विनीतः सन् पुनः पुन
रभिनंद्य पात्रं ब्राह्मणपादौ प्रक्षालयेत् ततः पुटकेऽर्घं कृत्वा दक्षिणाभिमुखोपसव्यं कृत्वा मोटकादिकमादायार्घपात्रं च वा
महस्ते कृत्वा ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिंडीकरणश्राद्धे एष पादार्घस्ते मया दीयते तवोपतिष्ठतामिति पादार्घं दद्यात्
ततः आचमनीयजलं पात्रस्थमभिनंद्य जानुनी विश्राव्य ॐ इदं ते आचमनीयमित्याचमनीयजलं ब्राह्मणाय दत्त्वा स्वयं पादौ
प्रक्षाल्याचम्य तमाचमय्याग्रे कृत्वा श्राद्धदेशमागच्छेत् पूर्वरात्रौ निमंत्रणासंभवे तस्मिन्नेवाह्नि श्राद्धवेलायां पूर्वोक्तविशेषण
विशिष्टं यजमानः सवर्णानाहूतं पूर्ववत्कृतगोमूत्रमंडलायां भूमौ त्रिः पुष्पाक्षतार्चितायां कुशोपरि तिष्ठन् ॐ स्वागतमिति ब्रा
ह्मणं पृच्छेत् ॐ सुस्वागतमिति तेनोक्ते उभावप्युपविशतः ततः श्राद्धकर्त्ता ॐ इदं ते पाद्यमिति पाद्यमुपनीय विनीतः पुनः पु
नरभिनंद्य पात्रं ब्राह्मणपादौ प्रक्षालयेत् ततोपसव्यं कृत्वा पुष्पचंदनतांबूलानि विप्रकरे दत्त्वा ब्राह्मणजानुं दक्षिणहस्तेन
स्पृष्ट्वा ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिंडीकरणश्राद्धकरणाय भवंतं ब्राह्मणमहमामंत्रये इत्यामंत्र्य ॐ आमंत्रि
तोस्मीति तेनोक्ते ॐ अक्रोधनेन शौचपरेणेत्यादिना ॐ सर्वायासविनिर्मुक्तेनेत्यादिना ब्राह्मणं नियमान् श्रावयेत् भवित
व्यमिति तेनोक्ते ऽर्घपरिकल्प्य वामहस्ते कृत्वा मोटकादिकमादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिंडीकरणश्राद्धे ए
ष पादार्घस्ते मया दीयते तवोपतिष्ठतामिति पादार्घं दद्यात् ॐ ततः आचमनीयजलं पात्रस्य शिरसाभिवंद्य जानुनि विश्रा

व्य ॐ इदं ते आचमनीयमिति ब्राह्मणाय दत्वा सव्येन स्वयं पादौ प्रक्षाल्याचम्याग्रे कृत्वा श्राद्धदेशमागच्छेत् तत्र प्राङ्मुख उपविश्य सि
द्धमिति पृष्ट्वा आसनं स्पृष्ट्वा आस्यतेति ब्राह्मणानुदङ्मुखमुपवेशयेत् द्विजपदयोस्तले कुशान्दद्यात् आसनसमीपे तिलतैलेन दी
पं स्थापयेत् अन्यांश्च प्रत्यासन्नसमीपे चतुरो दीपान्स्थापयेत् ब्राह्मणेन दीपरक्षा कर्त्तव्या रक्षोघ्नान्गौरसर्षपतिलान्श्राद्ध
देशे संनिधापयेत् काककुक्कुरादीन्श्राद्धगृहं तु न प्रसारयेत् ततोऽपवित्रः पवित्रो वेत्यादि पठित्वा ॐ पुंडरीकाक्षः पुनात्विति श्राद्धी
यद्रव्याण्यात्मानं च कुशत्रययवजलेन सिंचेत् ततः कुशत्रययतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्व
विमुक्तिहेतुं षोडशश्राद्धांतर्गतसपिंडीकरणश्राद्धमहं करिष्ये इति संकल्पं कुर्यात् ॐ कुरुष्वेति ब्राह्मणो वदेत् ॐ गायत्रीजप
महं करिष्ये इति ब्राह्मणं पृच्छेत् ॐ कुरुष्वेति तेनानुज्ञातः प्रणवव्याहृतिसहितां गायत्रीं त्रिर्जपेत् ततः ॐ देवताभ्य इति त्रिर्जपे
त् ततो देवश्राद्धार्थोपकल्पितासनादिदेशमागत्योदङ्मुख उपविश्य कुशत्रय[illegible]जलान्यादाय ॐ अद्यामुकगोत्रस्य पितुर
मुकप्रेतस्य सपिंडीकरणनिमित्तकामुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहामुकामुकशर्मश्राद्धसंबंधिनो विश्वेदेवा
इदमासनं वो नमः इति पूर्वाग्रकुशत्रयं तूष्णीं सयवजलप्रोक्षितमुत्सृजेत् ततः ॐ विश्वान्देवानहमावाहयिष्ये इत्युक्त्वा ॐ विश्वे
देवास आगत शृणुता म इमं हवं इदं बर्हिर्निषीदत इत्यावाह्य ॐ यवोसि यवयास्मद्द्वेषो यवयारातीरिति श्राद्धदेशे यवान्वि
कीर्य ॐ विश्वेदेवाः शृणुतेमं हवं मे ये अंतरिक्षे य उप द्यवि ष्ठ ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वं ॐ आ
गच्छंतु महाभागा विश्वेदेवा महाबलाः ये यत्र योजिताः श्राद्धे सावधाना भवंतु ते इति पठेत् ततः पुटके पवित्रं धृत्वा ॐ शन्नो
देवीरभिष्टय आपो भवंतु पीतये शंयोरभिस्रवंतु नः इति जलं तत्र क्षिप्त्वा ॐ यवोसि यवयास्मद्द्वेषो यवयारातीरिति तत्र यवा
न्क्षिप्त्वा गंधपुष्पं तूष्णीं तत्र प्रक्षिप्य अर्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे पूर्वाग्रं धृत्वा तदुपरि किंचिदुदकांतरं दत्वा ॐ या
दिव्या आपः पयसा इति पठित्वा कुशत्रययवजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिंडीकरणनिमित्तकामु

श्रा॰ दी॰ २२

त्वं

य

ग

४२

ए बह स्वधा वो नमः ॐ विश्वेभ्यो देवेभ्यो स्थानमसि इति देवार्घ्यपात्रं उत्तानमेव धारयेत्। ॐ अद्यामुक गोत्रस्य
क गोत्र पितामह प्रपितामह वृद्ध प्रपितामहामुकामुक शर्म श्राद्ध संबंधिनो विश्वेदेवा एतानि गंध पुष्प धूप दीप तांबूल यज्ञो
पवीत वासांसि वो नमः इति गंधादीनुत्सृजेत् ततो भोजनपात्रासनयोश्चतुर्दिक्षु जलेन चतुष्कोणं मंडलं कृत्वा अपसव्येन मोट
कादिकमादाय तिल घृत व्यंजनयुतमन्नं ॐ इदमन्नमेतद्भूस्वामि पितृभ्यो नमः इति दक्षिणामुखमुत्सृजेत् ततः सव्यं कृत्वा ता
म्रपात्रादिकं गृहीत्वा तेनान्नमादाय मनाक् स्थित्वा देवान्ध्यायन् पात्रे परिवेष्यात् व्यंजनानि घृतं जलं च तत्रोपनीयान्नोपरि
मधु दत्वा ॐ मधुवाता इति स्रचं मधुमधुमक्षिति मंत्रैरन्नमभिमंत्रयेत् ततः स्वजुहस्ताभ्यामन्नपात्रमालभ्य ॐ पृथिवी ते पात्रं
इत्यादि ॐ इदं विष्णुर्विचक्रमे इत्यादि च पठित्वा ॐ कृष्ण हव्यमिदं रक्षस्व मदीयमिति पठित्वा ॐ इदमन्नमित्यन्ने ॐ इमा आपः इति
जले ॐ इदमाज्यमिति घृते ॐ इदं हविरिति पुनरन्ने दक्षिणांगुष्ठमावेश्य ॐ यवोसि इत्यादिनान्नोपरि यवान्निक्षिप्य कुश
यव जलान्यादाय ॐ अद्यामुक गोत्रस्य पितुरमुक प्रेतस्य सपिंडीकरण निमित्तकामुक गोत्र पितामह प्रपितामह वृद्ध प्रपि
तामहामुकामुक शर्म श्राद्ध संबंधिनो विश्वेदेवा एतदन्नं सोपकरणं नमः इत्यन्नमुत्सृजेत् एवं देवकांडे निर्वर्त्य हस्तौ प्रक्षा
ल्य कुशावटुदकादिकं पुनर्गृहीत्वा प्रेतश्राद्धदेशमागत्योपविश्य अपसव्यादि कृत्वा दक्षिणाभिमुखो मोटकादीन्यादाय ॐ
अद्यामुक गोत्रामुक प्रेत सपिंडीकरण श्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठतामिति पित्रे आसनं मोटक रूप तिल जल प्रो
क्षितमुत्सृजेत् पुनर्मोटकादिकमादाय ॐ अद्यामुक गोत्रस्य पितुरमुक प्रेतस्य सपिंडीकरण निमित्तक श्राद्धे अमुक गोत्र
पितामहामुक शर्मन्निदमासनं ते स्वधा इति स्थानत्रयेल्कृप्तासनेषु सर्वपश्चिमस्थाने स्थितमासनं पितामहायोत्सृजेत्
पुनर्मोटकादीन्यादाय ॐ अद्यामुक गोत्रस्य पितुरमुक प्रेतस्य सपिंडीकरण निमित्तक श्राद्धे अमुक गोत्र प्रपितामहामुक श
र्मन्निदमासनं ते स्वधा इति मध्यममासनं प्रपितामहायोत्सृजेत् पुनर्मोटकादीन्यादाय ॐ अद्यामुक गोत्रस्य पितुरमुक
प्रेतस्य सपिंडीकरण निमित्तक श्राद्धे अमुक गोत्र वृद्ध प्रपितामहामुक शर्मन्निदमासनं ते स्वधा इति सर्वपूर्वमासनं वृद्धप्र

अं. श्री. २३

पितामहायोत्सृजेत् ततः पितामहादीनुद्दिश्य ॐ पितॄनह मावाहयिष्ये इत्युक्त्वा ॐ उशंतस्त्वा निधीमह्युशन्तः समिधीमहि उशन्नु
शत आवाह पितॄन्हविषे अत्तवे इति पितामहादीनावाह्य ॐ अपहता असुरा इत्युभयत्र श्राद्धस्थाने तिलान्विकीर्य्य ॐ आयंतु नः
पितरः इति मंत्रं जपेत् ततोऽर्घपात्रचतुष्टयेऽनवच्छिन्नं दक्षिणाग्रं पवित्रं प्रत्येकं धृत्वा ॐ शन्नोदेवीरिति प्रत्येकं जलं क्षिप्त्वा ॐ
तिलोसीति स्वाहांतेन मंत्रेण प्रत्येकं तेष्वेव तिलान्प्रक्षिप्य गंधपुष्पे तेष्वेव तत् सीप्रक्षिप्य प्रेतार्घपात्रं वामहस्ते कृत्वा ॐ यादि
व्या आप इत्यादि मंत्रं जपित्वा मोटकादीन्यादाय ॐ अद्यामुक गोत्र पितरमुक प्रेत सपिंडीकरण श्राद्धे एष हस्तार्घस्ते मया दी
यते तवोपतिष्ठतामिति पात्रं ब्राह्मणहस्तस्य पवित्रोपरि अर्घजलं दददुत्सृजेत् अवशिष्टजलसहितार्घपात्रं ब्राह्मणाग्रे नि
दध्यात् पितामहार्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि जलांतरं दत्वा ॐ यादिव्या इत्यादि पठित्वा मोटकादी
न्यादाय ॐ अद्यामुक गोत्रस्य पितुरमुक प्रेतस्य सपिंडीकरणनिमित्तक श्राद्धेऽमुक गोत्र पितामहामुक शर्मन् एष ते हस्ता-
र्घः स्वधा इति पूर्ववदर्घं दद्यात् अवशिष्टजलयुतमर्घपात्रमग्रे धारयेत् ततः प्रपितामहार्घपात्रं वामहस्ते कृत्वा पवित्रं भोज
नपात्रे धृत्वा तदुपरि जलांतरं दत्वा ॐ यादिव्या इत्यादि पठित्वा मोटकादीन्यादाय ॐ अद्यामुक गोत्रस्य पितुरमुक प्रेतस्य स
पिंडीकरणनिमित्तक श्राद्धेऽमुक गोत्र प्रपितामहामुक शर्मन्नेष ते हस्तार्घः स्वधेत्यर्घं ददत्पूर्ववदुत्सृजेत् तदर्घपात्रमव
शिष्टजलयुतमग्रे स्थापयेत् तृतीयार्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि जलांतरं दत्वा ॐ यादिव्या इत्या
(निमित्तक) दि पठित्वा मोटकादीन्यादाय ॐ अद्यामुक गोत्रस्य पितुरमुक प्रेतस्य सपिंडीकरणश्राद्धेऽमुक [illegible] प्रपितामहामुक श (गोत्र)
र्मन्नेष हस्तार्घः स्वधेति पूर्ववदुत्सृजेत् अवशिष्टजलयुतमर्घपात्रमग्रे स्थापयेत् ततः सव्यं कृत्वा चम्यापसव्यं कृत्वा
मोटकत्रयमग्रे धृत्वा प्रेतार्घपात्रं गृहीत्वा ॐ ये समानाः सुमनसः पितरो यमराज्ये तेषां लोकः स्वधा नमो यज्ञो देवेषु क
ल्पतां ये समानाः सुमनसो जीवा जीवेषु मामकाः तेषां श्रीर्मयि कल्पतामस्मिंल्लोके शतं समाः इति मंत्राभ्यां प्रेतार्घपात्र

स्यतृतीयभागजलं पुटकांतरे धृत्वा पुनरपिमंत्रद्वयं पठित्वा परतृतीयभागं पुटकांतरे धृत्वा प्रेतार्घपात्रस्यतृतीयभाग
जलं पुटकांतरे तूष्णीं धृत्वा प्रथमपुटकस्य विभक्तजलतृतीयभागं प्रेतार्घपात्रे कृत्वा पवित्रपुष्पसहितं प्रेतार्घपात्रमादाय ॐ
येसमानाइतिमंत्रद्वयेन प्रेतार्घपात्रस्यतृतीयभागजलं पितामहार्घपात्रस्यजले मेलयेत् एवमपरपुटकद्वयस्थितार्घतृतीय
भागद्वयं क्रमेण प्रत्येकं प्रेतार्घपात्रे कृत्वा प्रत्येकं मंत्रद्वयं पठित्वा प्रपितामहार्घपात्रस्यजले वृद्धप्रपितामहार्घपात्रस्यजलेक्र
मेण मेलयेत् ततः प्रेतार्घपात्रं पात्रब्राह्मणवामपार्श्वे ॐ पित्रेस्थानमसीतिन्युब्जीकृत्वा स्थापयेत् एवंस्थापितमर्घपात्रंच
तुर्थदक्षिणापर्यंतनचालयेत् ततोमोटकादिकमादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिंडीकरणश्राद्धे एतानिगंध
पुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि ते मयादीयते तवोपतिष्टतामितिपित्रे गंधादीनिदद्यात् पुनर्मोटकमादाय ॐ अद्यामु
कगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धे ऽमुकगोत्रपितामहामुकशर्मन्नेतानिगंधपुष्पधूपदीपतांबूल
यज्ञोपवीतवासांसितेस्वधेति पितामहायगंधादीनुत्सृजेत् पुनर्मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्यपितुरमुकप्रेत
स्यसपिंडीकरणनिमित्तकश्राद्धेऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नेतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि
तेस्वधेति वृद्धप्रपितामहायगंधादीनुत्सृजेत् ततः पितृपात्रब्राह्मणहस्ते स्वहस्तेन ॐ एषगंधः इति चंदनं निवेदयेत् ॐ सु
गंधइतितेनोक्ते ॐ एतानिपुष्पाणीतिपुष्पाणिनिवेदयेत् ॐ सुपुष्पाणीतितेनोक्ते ॐ एषधूपइतिधूपंनिवेदयेत् ॐ सुधूप
इतितेनोक्ते एषदीपइतिनिवेदयेत् ॐ सुदीपइतितेनोक्ते ॐ एतानितांबूलानिइतिनिवेदयेत् ॐ सुतांबूलानीतितेनोक्ते ॐ इमे
यज्ञोपवीते इतिनिवेदिते ॐ सुयज्ञोपवीतइतिप्रत्युक्ते ॐ एतानिवासांसीतिनिवेदयेत् ॐ सुवासांसीतिब्राह्मणोवदेत् पुष्पा
णिशिखातिरिक्तस्थानेन धारयेत् ततः पात्रब्राह्मणचतुर्दिक्षुचतुष्कोणमंडलंजलेनकुर्यात् अपरं पितामहादित्रिकोण
चतुष्कोणं मंडलं कुर्यात् ततः सव्यंकृत्वा प्राङ्मुखउपविश्यउपवीतीपातितदक्षिणजानुस्ताम्रपात्रादौव्यंजनंक्षारवर्जितंस
महार्घपात्रे धृत्वा पात्रत्रयमेकदैवपितामहासनवामपार्श्वे ॐ पितृभ्यः स्थानमसीतिन्युब्जीकृत्वास्थापयेत् १२

घृतमन्नं कृत्वा पुटकादिस्थं जलेन हस्तेन ओं अग्नये कव्यवाहनाय स्वाहा ओं सोमाय पितृमते स्वाहा इत्याहुतिद्वयं तदन्नं
च जुहुयात् ततोपसव्यं कृत्वा ऽवशिष्टमन्नं पितामहादिपात्रे किंचित्किंचिद्दद्यात् पिंडार्थं चावशेषयेत् ततो हस्ताभ्यां ताम्र
पात्रमादाय तेनान्नं गृहीत्वा प्रेतपात्रे ध्यायन् परिविष्यात् पृथक् पुटकादिस्थितानि घृतजलव्यंजनानि चोपनयेत् ततः
स्तेनैव क्रमेण पितामहादिपात्रत्रये प्रत्येकमन्नादि परिवेषणं कुर्यात् ततः प्रेतपात्रादिस्थितान्नेषु प्रत्येकं मधु दद्यात्
ततः प्रत्येकमन्नमभिमंत्रयेत् ओं मधुवाता ऋतायते मधुक्षरंति सिंधवः माध्वीर्नः संत्वोषधीः मधुनक्तमुतोषसो मधु
मत्पार्थिवं रजः मधु द्यौरस्तु नः पिता मधुमान्नो वनस्पतिर्मधुमान् अस्तु सूर्यः माध्वीर्गावो भवंतु नः ओं मधु मधु मध्विति मं
त्रैः ततः प्रेतान्नपात्रं हस्ताभ्यामनुजानुभ्यां हस्ताभ्यामालभ्य ओं पृथिवी ते पात्रमिति ओं इदं विष्णुर्विचक्रमे इति जपित्वा ओं
कृष्ण कव्यमिदं रक्षस्व मदीयमित्युक्त्वा पात्रस्य दक्षिणहस्तांगुष्ठं गृहीत्वा ओं इदमन्नं ओं इमा आपः ओं इदमाज्यं ओं इदं हवि
रिति क्रमेणान्नजलघृतान्नेषु तं प्रक्षिप्य मोटकादीन्यादाय ओं अद्यामुकगोत्रपितरमुकप्रेत सपिंडीकरणश्राद्धे इ
दमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठतामिति पित्रेऽन्नमुत्सृजेत् अनेनैव क्रमेण पितामहान्नपात्रमालभ्य ओं पृथि
वी ते इत्यादि जपित्वा ओं इदमन्नं इत्यादि स्वदक्षिणहस्तांगुष्ठनिवेशनं कृत्वा ओं अपहता इत्यादिना तिलानन्ने विकीर्य
मोटकादीन्यादाय ओं अमुकगोत्रस्य पितुरमुकप्रेतस्य सपिंडीकरणनिमित्तक श्राद्धेऽमुकगोत्र पितामहामुकशर्म
न्नेतत्तेऽन्नं सोपकरणं स्वधेति पितामहायान्नमुत्सृजेत् ततः प्रपितामहान्नपात्रमालभ्य पूर्ववत् ओं पृथिवीत्यादि कं
सर्वं कृत्वा मोटकादीन्यादाय ओं अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिंडीकरणनिमित्तक श्राद्धेऽमुकगोत्र प्रपि
तामहामुकशर्मन्नेतत्तेऽन्नं सोपकरणं तैः स्वधेति प्रपितामहायान्नमुत्सृजेत् ततो वृद्धप्रपितामहान्नपात्रमालभ्य पू
र्ववत् ओं पृथिवीते इत्यादिकं सर्वं कृत्वा ओं अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिंडीकरणनिमित्तक श्राद्धेऽमुकगोत्र

वृद्धप्रपितामहामुकशर्मन्नेतत्तेन्नं सोपकरणं स्वधेति वृद्धप्रपितामहायान्नमुत्सृजेत् ततः ॐ भवान्प्राशयत्विति पात्र
ब्राह्मणाय जलचुलकं दत्वा सप्रणवव्याहृतिकां गायत्रीं ॐ मधुवाता इत्यादि सृचं ॐ मधु मधु मध्विति च जपित्वा ॐ अन्न
हीनमित्यादि च पठित्वा ॐ यथासुखं जुषस्वेति पात्र ब्राह्मणं प्रति ब्रूयात् स च ॐ कारपूर्वं वामेन पाणिना पात्रमत्यज
न् चुलकं गृहीत्वा भुंजीत हासक्रोधत्वरादिकं न कुर्यात् व्यंजनार्थं हस्तादिनापि संज्ञां न कुर्यात् श्राद्धकर्त्ता दर्भेष्वा
सीनः सप्रणवव्याहृतिकां गायत्रीं ॐ मधुवाता इत्यादि सृचं ॐ मधु मधु मध्विति च जपेत् गायत्रीं ब्राह्मणमनु श्राव्य
ॐ कृणुष्व पाज इत्यादीन् रक्षोघ्नमंत्रान् पठित्वा भूमिं तिलैरास्तीर्य्य श्राद्धीयब्राह्मणापितृरूपतया ध्यात्वा ॐ उदीरतामि
त्यादि पितृमंत्रान् ॐ सहस्रशीर्षा इत्यादि पुरुषसूक्तं ॐ आशुः शिशानो इत्यादिकं यथाशक्ति जपेत् ॐ नमस्तुभ्यं वि
रूपाक्ष इति श्लोकमपि पठेत् वीणादिध्वनिभिर्ब्राह्मणं हर्षयन् व्यंजनगुणानिदमन्नमित्यादिक्रमेण कीर्त्तयन् यत्र य
त्रेष्टोपलभ्येत तत्तदन्नं भोजयेत् ततस्तृप्तं ब्राह्मणं ज्ञात्वा पितामहपात्रसंनिधावास्तृतदक्षिणाग्रकुशत्रयां भूमिं प्रो
क्ष्य सर्वप्रकारकमन्नमादाय सतिलघृतजले नप्लाव्य ॐ अग्निदग्धाश्च इत्यादिनास्तृतकुशोपरि तदन्नं विकिरेत् ततः
सव्यं कृत्वा चम्य हरिं स्मृत्वा पसव्येन पात्रब्राह्मणाय ॐ इदं ते प्रत्यपोशानमिति गंडूषं दत्वा ॐ स्वदितमिति पृष्ट्वा ॐ सु
स्वदितमिति तेनोक्ते ॐ पिंडमहं करिष्ये इति तं पृच्छेत ॐ कुरुष्वेत्यनुज्ञातः पात्र ब्राह्मणायाचमनार्थं पात्रं दापयेत् त
तः प्रेतपिंडदानार्थमेकामपरां पितृमहादित्रिकपिंडदानार्थमेकहस्तमितां चतुरंगुलोच्छ्रितां सैकतीं दक्षिणप्लवां पिंडि
कां निर्माय तन्मध्ये वामेन पाणिना दर्भपिंजलीं गृहीत्वा दक्षिण[illegible]ते कृत्वा तन्मूलेन सव्योपगृहीत दक्षिणपाणिना ॐ अ
पहता इत्यादि पठित्वा दक्षिणाग्रां रेखां प्रादेशमात्रां सकृदुल्लिख्य दर्भपिंजलीमुत्तरस्यां दिशि क्षिपेत् एवमेवापरपिंडि
कायामप्येकां रेखां कुर्यात् ततः पूर्वपिंडिकारेखोपरि ॐ ये रूपाणि प्रतिमुंचमाने ति मंत्रेणांगारं भ्रामयित्वा दक्षितः क्षिपेत्

श्रा॰
छी॰
२५

एवमेवापररेखायामंगारंभ्रामयेत् ततउभयत्ररेखायामुपमूलसकृल्लूनान्दक्षिणाग्रान्कुशान्स्तृणुयात् ततः सव्यं कृत्वा ॐ
देवताभ्य इति त्रिर्जपेत् ततोपसव्यं कृत्वा पुटकचतुष्टये जलतिलगंधपुष्पाणि कृत्वा एकं पुटकं वामहस्ते कृत्वा मोटकादी
न्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिंडीकरणश्राद्ध पिंडस्थानेऽत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्टतामिति पू
र्वपिंडिकायां छिन्नमूलोपरि अवनेजनं दद्यात् ततोपरं पुटकं वामहस्ते कृत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य
पितुरमुकप्रेतस्य सपिंडीकरणनिमित्तकश्राद्धपिंडस्थानेऽमुकगोत्रपितामहामुकशर्मन्नत्रावनेनिक्ष्व ते स्वधेति द्विती
यपिंडिकायामास्तृतकुशमूलसंनिधाने पितामहायावनेजनजलं दद्यात् ततोपरं पुटकं वामहस्ते कृत्वा दक्षिणहस्ते
न मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिंडीकरणनिमित्तकश्राद्धपिंडस्थानेऽमुकगोत्र पिताम
हामुकशर्मन्नत्रावनेनिक्ष्व ते स्वधेति आस्तृतकुशमध्ये प्रपितामहायावनेजनं दद्यात् ततोपरं पुटकं वामहस्ते कृत्वा मोट
कादीन्यादाय ॐ अद्यामुकगोत्रपितुरमुकप्रेतस्य सपिंडीकरणनिमित्तकश्राद्धपिंडस्थानेऽमुकगोत्र वृद्धप्रपितामहा
मुकशर्मन्नत्रावनेनिक्ष्व ते स्वधेति आस्तृतकुशाग्रे वृद्धप्रपितामहायावनेजनं दद्यात् ततोदक्षिणहस्तेन मोटकतिल
जलपिंडानादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिंडीकरणश्राद्धे एष पिंडस्ते मया दीयते तवोपतिष्टतामिति पूर्वपिं
डिकायां कुशोपरि पित्रे पिंडं दद्यात् पुनर्मोटकादीनि पिंडं चादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिंडीकर
णनिमित्तकश्राद्धेऽमुकगोत्र पितामहामुकशर्मन्नेष ते पिंडः स्वधेति द्वितीयपिंडिकायां प्रथमावनेजनस्थाने पिताम
हाय पिंडं दद्यात् पुनर्मोटकादीनि पिंडं चादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिंडीकरणनिमित्तकश्राद्धेऽ
मुकगोत्र प्रपितामहामुकशर्मन्नेष ते पिंडः स्वधेति प्रपितामहायापरावनेजनस्थाने पिंडं दद्यात् पुनर्मोटकादीनि
पिंडं चादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिंडीकरणनिमित्तकश्राद्धेऽमुकगोत्र वृद्धप्रपितामहामुकश

प्र



50

मन्नेषतेपिंडःस्वधेतिरुद्रप्रपितामहायापरावनेजनस्थानेपिंडंदद्यात् ततःपितामहादिपिंडास्तरणकुशमूले ओंले
पभागभुजस्तृप्यंत्वितिकरंप्रोक्ष्यसव्यंकृत्वाचम्यहरिंस्मरेत् ततोपसव्यंकृत्वादक्षिणाभिमुखःपितरमुद्दिश्य ओंअत्र
पितामादयध्वंयथाभागमावृषायध्वेतिपठित्वाउत्तराभिमुखोभूत्वाश्वासंनियम्यभासुरमूर्त्तिंपितरंध्यायन् मुखंदक्षिणां
दिशंप्रत्यावर्त्तयन् ओंअमीमदंतपितायथाभागमावृषायिषतेतिपठेत् ततःपितामहादीनुद्दिश्यदक्षिणाभिमुखः ओंअत्रपि
तरोमादयध्वंयथाभागमावृषायध्वमितिपठित्वाउत्तराभिमुखोभूत्वाश्वासंनियम्यतुष्टान्भासुरमूर्त्तीन्पितॄन्ध्यायन्मु
ते खंप्रत्यावर्त्तयन् ओंअमीमदंतपितरोयथाभागमावृषायिषतेतिपठेत् ततःप्रेतावनेजनपात्रंवामहस्तेकृत्वामोटकादीन्याद
य ओंअद्यामुकगोत्रपितरमुकप्रेतसपिंडीकरणश्राद्धपिंडेऽत्रप्रत्यवनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामितिपित्रेप्रत्यवने
जनंदत्वा पितामहावनेजनपात्रंवामहस्तेकृत्वामोटकादीन्यादाय ओंअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरण
निमित्तकश्राद्धपिंडेऽमुकगोत्रपितामहामुकशर्मन्नत्रप्रत्यवनेनिक्ष्वतेस्वधेतिपितामहायप्रत्यवनेजनंदत्वा प्रपिताम
हावनेजनपात्रंगृहीत्वामोटकादीन्यादाय ओंअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धपिंडे
ऽमुकगोत्रप्रपितामहामुकशर्मन्नत्रप्रत्यवनेनिक्ष्वतेस्वधेतिप्रपितामहायप्रत्यवनेजनंदद्यात् ततोवशिष्टंपुटकमादाय
मोटकादीन्यादाय ओंअद्यामुकगोत्रस्यपि[illegible]मुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धपिंडेऽमुकगोत्ररुद्रप्रपिताम
हामुकशर्मन्नत्रप्रत्यवनेनिक्ष्वतेस्वधेतिरुद्रप्रपितामहायप्रत्यवनेजनंदद्यात् ततोनीवींविस्रंस्यसव्यंकृत्वाचम्यहरिं
स्मृत्वाऽपसव्यंकृत्वावामेनपाणिनाधृतंसूत्रंदक्षिणेनादाय ओंएतद्वःपितरोवासःइत्युभाभ्यांहस्ताभ्यांपितृपिंडोपरिसूत्रंधा
रयेत् पूर्ववत्पुनःसूत्रमादाय ओंनमोवःपितरोरसायनमोवःपितरःशोषाय नमोवःपितरोजीवाय नमोवःपितरःस्व

श्रा·
स्पी·
२६

धायै नमोवः पितरो घोराय नमोवः पितरो मन्यवे नमोवः पितरः पितरो नमोवो गृहान्नः पितरो दत्त सतोवः पितरो देष्म ॐ
एतद्वः पितरोवासः इति मंत्रं पठित्वा प्रत्येक पिंडोपरि सूत्रं धारयेत् ततो मोटकादीन्यादाय ॐ अद्यामुक गोत्र पितरमुक प्रे
तस्य सपिंडीकरण श्राद्ध पिंडे एतद्वासस्ते मयादीयते तत्वोपतिष्ठतामिति पित्रे सूत्रमुत्सृजेत् पुनर्मोटकादीन्यादाय ॐ अद्या
मुक गोत्रस्य पितुरमुक प्रेतस्य सपिंडीकरण निमित्तक श्राद्ध पिंडेऽमुक गोत्र पितामहामुक शर्मन्नेतत्तेवासः स्वधेति सू
त्रं पितामहायोत्सृजेत् पुनर्मोटकादीन्यादाय ॐ अद्यामुक गोत्रस्य पितुरमुक प्रेतस्य सपिंडीकरण निमित्तक श्राद्ध
पिंडेऽमुक गोत्र प्रपितामहामुक शर्मन्नेतत्तेवासः स्वधेति प्रपितामहाय सूत्रं समुत्सृजेत् पुनर्मोटकादीन्यादाय
ॐ अद्यामुक गोत्रस्य पितुरमुक प्रेतस्य सपिंडीकरण निमित्तक श्राद्ध पिंडेऽमुक गोत्र वृद्ध प्रपितामहामुक शर्मन्नेत
त्तेवासः स्वधेति वृद्ध प्रपितामहाय सूत्रमुत्सृजेत् ततः प्रत्येकं पितृ पिंडादिषु गंध पुष्प धूप दीप तांबूलानि दद्यात् ॥
ततः पिंड समीपे तत्तत्पिंड शेषान्नं विकिरेत् ततः पिंडेषु सूत्रादिकमपनीय हस्तद्वयेन सुवर्ण रजत कुशानादाय ॐ ये
समानाः सुमनसः पितरो यमराज्ये तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पतां ये समानाः सुमनसो जीवा जीवेषु मा
मकाः तेषां श्रीर्मयि कल्पतामस्मिंल्लोके शतं समा इति मंत्र द्वयं पठित्वा प्रेत पिंडं त्रिधा विभजेत् वारद्वयं मंत्रपाठः त
तः प्रथम पिंड भागमादाय ॐ ये समाना इति मंत्र द्वयेन पितामह पिंडे योजयेत् एवं द्वितीय पिंड भागमादाय मंत्र द्व
येन प्रपितामह पिंडे योजयेत् तृतीय पिंड भागमादाय मंत्र द्वयेन वृद्ध प्रपितामह पिंडे योजयेत् ततः प्रेत भागेन सह पिं
डत्रयं प्रत्येकमेकीकृत्य समं वर्तुलं कुर्यात् ततः प्रेत पूर्वकं पितामहादीन् त्रिषु पिंडत्रयेष्वर्घ पुष्प धूप दीप तांबूला
नि दद्यात् ततः सव्येन देवान्न पात्रे ॐ शिवा आपः संत्विति जलं दद्यात् अपसव्येन पितृ ब्राह्मण हस्ते पूर्व मंत्रेण जलं द
द्यात् ॐ संत्विति तत्प्रतिवचनं ततः पितामहान्न पात्रेषु प्रत्येकं जलं दद्यात् अनेनैव क्रमेण ॐ सौमनस्यमस्त्विति सव्या

५२

ऽपसव्याभ्यां पुष्पदानं ॐ अस्त्विति ब्राह्मणप्रतिवचनं सव्येन ॐ अक्षतं चारिष्टमस्त्विति तंडुलप्रक्षेपो देवान्नपात्रे ततोपसव्ये
न प्रेतश्राद्ध पात्र ब्राह्मणकरे ॐ अक्षतं चारिष्टमस्त्विति तंडुलप्रक्षेपः ॐ अस्त्विति प्रतिवचनं त्रिकेपि प्रत्येकं ततो मोटकादी
न्यादाय ॐ अद्यामुक गोत्रस्य पितुरमुक प्रेतस्य सपिंडीकरण श्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठतामिति पितुरक्षय्योदकं
पात्र ब्राह्मणकरे उत्सृजेत ॐ उपतिष्ठतामिति प्रतिवचनं पुनर्मोटकादीन्यादाय ॐ अद्यामुक गोत्रस्य पितुरमुक प्रेतस्य स
पिंडीकरणनिमित्तक श्राद्धेऽमुकगोत्रस्य वृद्धप्रपितामहस्यामुकशर्मणो दत्तैतदन्नपानादिकमक्षय्यमस्त्विति वृद्धप्र
पितामहायाक्षय्योदकं दद्यात् ततः सव्यं कृत्वा कृतांजलिस्तन्मनाः सुमना दक्षिणां दिशं पश्यन् ॐ अघोराः पितरः संत्वि
ति पितामहादिषु पिंडत्रयोपरि पूर्वाग्रां जलधारां दद्यात् ॐ संत्विति ब्राह्मणप्रतिवचनं अत्र वारिधारादानमाचारात् अन्यथा
तु पाठमात्रं ततः प्राङ्मुखः गोत्रं नो वर्द्धतामिति पठेत् ॐ वर्द्धतामिति प्रतिवचनं ॐ दातारो नोभिवर्द्धंतां वेदाः संततिरेव च ।
श्रद्धा च नो माव्यगमद्बहुदेयं च नोस्तु अन्नं च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः संतु मा च याचिष्म कंचन
एताः सत्याशिषः संत्विति याचेत् ॐ संत्विति प्रतिवचनं ततोपसव्यं कृत्वा पिंडोपरि सपवित्रकुशत्रयं दक्षिणाग्रमास्तीर्य
ॐ पितॄन्नमो वाचयिष्ये इति ब्राह्मणं ब्रूयात ॐ वाच्यतामित्यनुज्ञातः ॐ पितृभ्यो नम उच्यतामिति ब्राह्मणं ब्रूयात् ॐ अस्तु नम इ
ति ब्राह्मणो वदेत् ततो वामहस्तोद्धृतं जलपात्रं दक्षिणेनादाय ॐ ऊर्जं वहंतीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ
तर्पयत मे पितॄनिति पित्रानुद्दिश्यापसपवित्रकुशोपरि दक्षिणाग्रां जलधारां दद्यात् ततो नम्रीभूय पिंडानाघ्रायोत्थापयेत् पिं
डाधारकुशानुल्मुकं च वह्नौ क्षिपेत् सव्येन देवार्घपात्रं संचाल्यापसव्येन पित्र्याद्यर्घपात्राणि पुत्तानी कृत्य दक्षिणां दद्यात्
तत्र सव्येन कुशत्रययवजलदक्षिणाद्रव्याण्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुक प्रेतस्य सपिंडीकरणनिमित्तकामुक
गोत्रपितामहप्रपितामहवृद्धप्रपितामहामुकामुकशर्मश्राद्धसंबंधिनो विश्वेषां देवानां कृतैतच्छ्राद्ध प्रतिष्ठार्थमिदं हिरण्य

८

श्रा॰ प्री॰ २७

मग्निदैवतंयथानामगोत्रायब्राह्मणायदक्षिणांदातुमहमुत्सृजे इति प्राङ्मुखउत्सृजेत् ततोपसव्यंकृत्वादक्षिणाभिमुखो
मोटकतिलजलान्यादायदक्षिणाद्रव्यंचादाय ॐअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यकृतैतत्सपिंडीकरणश्राद्धप्रतिष्ठा
र्थमिदंरजतंचंद्रदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणांतुभ्यमहंसंप्रददे इतिदक्षिणांपितृब्राह्मणकरेद-
द्यात् ॐस्वस्तीतिप्रतिवचनं पुनस्तथैवदक्षिणाद्रव्यादिकमादाय ॐअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीक
रणनिमित्तकश्राद्धेकृतैतदमुकगोत्रपितामहामुकशर्मप्रतिष्ठार्थमिदंरजतंचंद्रदैवतंयथानामगोत्रायब्राह्मणायद
क्षिणांतुभ्यमहंसमुत्सृजे इतिपितामहश्राद्धे दक्षिणांदद्यात् पुनर्दक्षिणाद्रव्यादिकमादाय ॐअद्यामुकगोत्रस्यपितु
रमुकप्रेतस्यसपिंडीकरणनिमित्तककृतैतदमुकगोत्रप्रपितामहामुकशर्मश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतंयथा
नामगोत्रायब्राह्मणायदक्षिणांदातुमहमुत्सृजे इतिप्रपितामहश्राद्धदक्षिणांदद्यात् पुनर्दक्षिणाद्रव्यादिकमादायॐ
अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तककृतैतदमुकगोत्रश्राद्धप्रपितामहामुकशर्मश्राद्धप्रतिष्ठार्थ
मिदंरजतंचंद्रदैवतंयथानामगोत्रायब्राह्मणायदक्षिणांदातुमहमुत्सृजे इतिवृद्धप्रपितामहश्राद्धदक्षिणांदद्यात् ततः
सव्यंकृत्वा ॐविश्वेदेवाःप्रीयंतामितिदेवविसर्जनंकृत्वापसव्यंकृत्वापितृश्राद्धब्राह्मणं ॐनिरोंकारस्वस्तिब्रूहीतिव
देत् स्वस्तीतितेनोक्ते स्वस्त्यस्त्वितिपितृब्राह्मणंविसृज्यगृहीतपितृब्राह्मणांगुष्ठोगृहीतोदकपात्रोवहिर्निमंत्रणस्था
नमागत्यब्राह्मणंस्थापयित्वा ॐआमावाजस्यप्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे आमागंतांपितरामातराचामा
सोमोअमृतत्वेनगम्यादितिप्रदक्षिणांकुर्वन् उदकधारयात्रिर्वेष्टयेत् ततःप्रणम्यांगुष्ठोपादानंतुव्रज्यप्रदक्षिणीकृत्याभि
वादयेत् ततःसव्यंकृत्वा ॐदेवताभ्यइतित्रिर्जपेत् ततोगृहंप्रविश्यसव्यापसव्याभ्यांदेवपितृश्राद्धदीपानपाणिभ्यांनि
र्वापयेत् ततःसव्येनपाणिनापादप्रक्षालनमाचमनंचकुर्यात् ततः ॐप्रमादादित्यादिपठित्वा एतत्फलकामोविष्णुंस्मरेत्